# सागरिका

त्रैमासिकी

द्वादशे वर्षे तृतीयोऽङ्कः

२०२६

सम्पादकः
**डॉ० रामजी उपाध्यायः**
सागरविश्वविद्यालये
संस्कृतविभागस्य वरिष्ठप्राध्यापकाध्यक्षः

मूल्यं रु० १०–०० वार्षिकम् ]    [ मू० रु० ३–०० प्रत्यङ्कम्

प्रकाशिका
संस्कृतपरिषद्
सागरविश्वविद्यालयः
सागरम् [ म० प्र० ]

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३—०० रुप्यकाणि |
| वार्षिकम् | १०—०० रुप्यकाणि |
| आजीवनग्राहकस्य | १५०—०० रुप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्ष अषाढा-श्विन-पौष-चैत्र [ जून-सितम्बर-दिसम्बर-मार्च-- ]-मासेपु |

सूच्यम् : आजीवनग्राहकेभ्यः सागरिकाया· प्राचीना अपि सर्वेऽङ्का सवस्त्र-पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रकः
बैजनाथ जायसवाल
अरुण प्रेस,
तिलभाण्डेश्वर,
वाराणसी

## विषय-सूची





# बौद्धवैष्णवयोर्भक्तिदर्शनसाम्यम्[1]

प्रा० जगन्नाथ उपाध्यायः

( ६ )

रामानुजप्रमुखवैष्णवानां भक्तिदर्शने महायानबौद्धानां साकारविज्ञानवादे च सत्यपि अनेकशोऽवान्तरभेदे अन्तस्तलीभूतमुभयोः किञ्चित् तत्त्वज्ञानसाम्यमत्र प्रदर्शितं भवति। यद्यपि वेदार्थसङ्ग्रह (पृ० २४)-श्रीभाष्यादिषु प्रतिपादितस्य विशिष्टाद्वैतादिमतस्योपबृंहणाय रामानुजाचार्यैर्भगवद्बोधायनादारभ्य टङ्क-द्रमिडप्रभृतिस्वपुरातनैराचार्यैः परिगृहीतव्याख्यानुकूल एव पन्था गृहीत इति सप्रसभमुद्घोष्य, तदनुरोधेन वेदबाह्यानि बौद्धादिमतानि निरस्तानि भवन्तीति हेतो· स्वप्रस्थानं परेभ्योऽव्यामिश्रमिति कृत्वा प्रस्तावितं, तथापि बौद्धवैष्णवादिमतानाम् अन्तःपर्यालोचनया पर्यवसित द्वयोरतिचित्रं समुपलभ्यमानं साम्यमपावृतं भवत्येव। बौद्धानां त्रीणि यानानि सुप्रसिद्धानि (तत्त्वरत्नावली, पृ० १४) श्रावक-पत्येकबुद्धबोधिसत्त्वमहायानानीति। यत्र महायान पारमितानय-मन्त्रनयाभ्या भिन्नम्। मन्त्रनयोऽपि योगाचारमाध्यमिकाभ्यां द्विधा भिद्यमानो दृश्यते। तत्र यद्यपि योगाचारानुरोधेन विज्ञानवादस्य अनेकाः स्थितयो भवन्ति, तथापि साकारनिराकारवादित्वाभ्यां भिन्ने विज्ञानवादे भेदसहः साकारविज्ञानवादाद्वैतवादः भेदासहश्च निराकारविज्ञानवादाद्वैतवादः प्रथते। तत्र निराकारविज्ञानवादस्य प्रभावातिशयो यथा शाङ्कराद्वैतवादिनां निर्विशेषाद्वैतवादे दृश्यते, तथैव रामानुजीयाना सविशेषाद्वैतवादे साकारविज्ञानवादाद्वैतवादस्य प्रभावो लभ्यत एवेति मम विमर्शः। तृतीयचतुर्थशताब्दीत आरभ्य रामानुजाचार्याणामवस्थितिकालपर्यन्त बौद्धाचार्यैः असङ्ग-वसुबन्धु-दिङ्नाग-प्रज्ञाकरगुप्त-शान्तरक्षित-कमलशीलप्रभृतिभिः स्वस्वाकरग्रन्थेषु साकारविज्ञानवादो यत्र-तत्र चर्चितः। इदानीं 'साकारसिद्धिशास्त्र'-

---

१. सागरिकाया १२।२ अङ्कतोऽग्रे।

नाम्ना 'साकारसंग्रहसूत्र'-नाम्ना च विदुषां निकषायमाणं निबन्ध-ग्रन्थद्वयं ज्ञानश्रीमित्रनिबन्धावलिग्रन्थे संगृहीतं समुपलभ्यते। साकार-विज्ञानवादिनामाचार्यज्ञानश्रीमित्राणामेतद्ग्रन्थस्थं सिद्धान्तोत्कटत्वं शमयितुमेव पश्चाद्वर्तिभिरुदयनाचार्यैः स्वकीयात्मतत्त्वविवेक-न्याय-कुसुमांजलिप्रभृतिग्रन्थेषु तेषा मतानि सोल्लेखं चालोचितानि।

( ७ )

अस्य चाचार्यज्ञानश्रीमित्रस्यावस्थितिकाल: प्राय. स एव यो रामानुजाचार्यस्य। मन्ये, ख्रिष्टीयैकसहस्रतमेऽब्दे• आदौ मध्ये चानयोरुपस्थिति: निश्चितप्राया। यद्यपि तयो: क: पूर्व· कश्च पर इति निर्धारण नामातीव दु:शक, तथापि रामानुजाचार्यस्यावासभूमि: दक्षिणे काञ्चीपुरप्रदेश, विक्रमशीलविश्वविद्यालयमहाविहारस्य प्रधानाचार्यस्य ज्ञानश्रीमित्रस्यावास: उत्तरे मगधप्रदेशे इति सुनि-श्चितम्। भारतवर्षस्य विपरीतोपान्त्यभूमौ स्थितयोरप्येतयोराचार्ययो: निहित दर्शनसाम्य बौद्धवैष्णवभक्त्योर्विकासाय प्रशस्तमाधारं पुष्णाति। एतत्तथ्य प्रकाशयितुमेवात्र आचार्यज्ञानश्रीमित्राणा रामानुजाचार्याणा च दर्शनसाम्य विवेचनीयतामर्हति।

रामानुजाचार्याणां दर्शनहृदयमवगन्तु, मन्ये, तेषा ज्ञानाना निर्वि-शेषत्वनिरासपूर्वक· सविशेषवाद:, असत्ख्याति-मायाख्यात्यादिनिरास-पूर्वको ज्ञानयथार्थवाद:- स्मृतेर्ग्यथार्थत्वप्रतिपादनपुर सर परज्ञान-परभक्त्योरेकत्ववाद: निर्गुणत्वखण्डनपुर:सरं सगुणवतो भगवत: स्वरूपं तत्कृत्य चेति वादा विशेषेण विमृश्यतां भजन्ते। वैष्णवनिकाय-सम्मतानाम् एतेषां वादाना साम्य अन्वेषितु बौद्धविज्ञानवादनिकाये च प्रख्यातो निराकारनिरासपूर्वक: साकारविज्ञानवाद:, असत्ख्यात्यादि-निरासपूर्व: साध्यवसायस्वसंवेदनवाद:, प्रज्ञाकरुणयोरैक्यवाद·, बुद्धस्य त्रिकायव्यवस्था तत्कृत्यं चेति वादा: सम्यग् विवेचनीया:।

एतेषा बौद्धवैष्णववादानाम् अन्तस्तत्त्वावगाहनात् पूर्वं एतद् विशेषेणानुध्यातव्य भवति, यद् यद्यपि विज्ञानवादे रामानुजाचार्य-वज्जगत: सत्यत्वम्, चिदचिद्विशिष्टयोरद्वैतत्व न कथञ्चित् सम्मतम्, केवलमेकस्यैव विज्ञानस्य सत्त्वमभिप्रेतं, तथापि साकार-वादिबौद्धै: कथचिदपि ज्ञानस्य निराकारत्वं नाङ्गीकृतम्। इयमेव

बौद्धवैष्णवयोः समाना विचारभूमिः, यत्र गत्वा पर्यवसाने परस्पर-विरुद्धाभिमतयोरप्येतयोर्दर्शनयोस्तुल्यो विकासः समजनि ।

( ८ )

**साकार-सविशेषज्ञानवादौ**

निराकारविज्ञानवादिनां मते विशुद्धमेकमेवाकाररहितं विज्ञानम् । यच्च साकारं विज्ञानं भासते लोके, तदनादिभ्रान्तिवासनोपप्लववशात् स्वप्नादिवत् भ्रान्तमेव, तस्यालीकैराकारैः प्रख्याततत्वात् । साकार-वादिमते नीलाद्याकारव्यतिरिक्तत्वेन केवलं विज्ञानस्वरूपं न प्रत्यक्षेण न चानुमानेन सिध्यति । एतेषां च मते घटादिव्यतिरेकेण दृश्यात्मनो ज्ञानस्यानुपलभ्यमानत्वाद् वैशेषिकादिपरिकल्पितसामान्यादिवत् केवलविज्ञानस्य सत्त्वाभावः । उक्तं च ज्ञानश्रिया—

**न सन्ति सामान्यगुणादयो यथा सितादिभेदेषु निरंशभासिषु ।**
**तथा प्रकाशान्तरमप्यसत्ततः सितादिबाधे किमबाधसम्भवः ॥**

एतद्बौद्धमतं सवादितया रामानुजपादा अपि 'सर्वप्रमाणानां सविशेषवस्तुविषयत्वात् न क्वचिन्निर्विशेषवस्तुसिद्धिरि'—ति श्रीभाष्ये महासिद्धान्ते (पृ० ६१ ) प्रतिपादयन्ति । यथा च—

**प्रकाश एव सत्त्वं तत्कार्यं धीरेव तस्य वा ।**
**न कार्यान्तरेणास्याः सत्त्वं किन्तु स्वसंविदः ॥** ( पृ० ३९९ )

इत्यादिवचनैर्ज्ञानश्रिया स्वसंविदितत्वेनैव ज्ञानस्य साकारत्वं स्वीकृतम्, तथैव रामानुजाचार्यैरपि "धियो हि धीत्वं स्वप्रकाशता च, ज्ञातु-र्विषयप्रकाशस्वभावतयोपलब्धेः" ( पृ० ६१ ) इत्यादिदिशा ज्ञान-सविशेषत्वमनुमोदितम् । यद्यपि सद्वस्तुवादिरामानुजमते अवस्तुवादिना बौद्धानामिव सामान्यस्य वा सर्वथा असत्त्वं, तथापि संस्थानाकारमात्र सामान्यमङ्गीकुर्वद्भिः रामानुजैर्निर्विकल्पकज्ञानकालेऽपि वस्तुसंस्थान-विशेषरूपस्य भानात्, ज्ञानस्य सर्वथाऽपि निराकारवादित्व खण्डितम् । अतएव रामानुजमते 'निर्विकल्पक नाम केनचिद् विशेषेण वियुक्तस्य ग्रहणं न सर्वविशेषरहितस्ये'त्युक्तम् ( पृ० ६२ ) । आचार्यधर्मकीर्तिना स्वप्रमाणवार्तिके यदुक्तम्—"**नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्च सः**" ( प्र० वा० ३२८ ) इति, तेन स्वसंवेदनरूपस्य विज्ञानस्य

स्वभावतः साकारत्वं समर्थितं भवति। रामानुजेनापि 'जात्यादि-विशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वात्' 'प्रत्यक्षस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वाद्' इत्यादियुक्तिभिः ज्ञान-साकारवादो बौद्धवदेव समर्थितः। अतएव त्रैतसत्यत्ववादिनि रामानुजनये ज्ञप्तिमात्रमात्मनो रूपमसंभवीतिकृत्वा स्वत एव ज्ञातृतया सिध्यन् अहमर्थाकार एव आत्मा पर्यवस्यति। इति अभिप्रेत्योक्तम्—'अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरि'ति (पृ० ७०)।

( ६ )

साध्यवसायस्वसंवेदन-सर्वयथार्थज्ञानवादौ निराकारज्ञानवादि-बौद्धानामयमधिक्षेपो, यत् यदि निराकारस्य चेतसोऽसत्त्व तदा साकारवादिबौद्धेषु बन्धमोक्षव्यवस्थैव लुप्येत। ज्ञानस्य निराकारत्वे स्वीक्रियमाणे तु तत्र अतस्मिस्तद्ग्रहरूपत्वेन भ्रान्त्या साकारस्य ससारस्य प्रतिभासाद् बन्धः, अविद्यासमुद्घाते च भ्रान्तिविगमात् अनाभासम् अमलं प्रकाशमात्र निर्वाण अवशिष्येत। अन्यथा साकारवादे तु साकारबोधस्यैवाविपरीतस्वभावत्वात् तस्यैव च बोधात् सुतरा भ्रान्तेरत्यन्तमभावः स्यात्, भ्रान्तेरभावे च तस्या व्यवदान सर्वथा असगत स्यात्। एतेन च सर्वसत्त्वानि सदैव मुक्तानि सदैव सम्यक् सम्बुद्धानि भवेयु.। इत्थ साकारनये सक्लेशव्यवदान-व्यवस्था अस्त यायात्।

प्राय इत्थमेवाधिक्षेपा निराकारब्रह्मवादिशाङ्कराणा साकारब्रह्म-वादिरामानुजीयमतान्यधिकृत्यापि भवन्ति। तथाहि—अनुभूतिः पर-मार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते, मोक्षदशाया चैतत् सर्व नानुवर्तते—इत्यादिवचनैः। यद्यपि बौद्ध-साकारवादे स्वसविज्ञाने आकारस्य, रामानुजमते च आत्मप्रतिभाने अहमर्थस्य सदसत्त्वे अधिकृत्य विमर्शबाहुल्य प्रतीयते, तथापि अनयोः द्वयोरपि ज्ञानसाकारवादित्वेनैव सग्रहो बोद्धव्यः। एव स्व-स्वप्रति-पक्षिणामभ्युपगमहानाय साकार-सविशेषवादिबौद्धवैष्णवैः ज्ञान-विषये ख्यातिवादो बाध्यबाधकभावो भ्रमव्यवस्थान च यथावत् स्वस्व-प्रस्थानानुरोधेन चर्चितम्। तत्र युक्तयः व्यवस्थापनप्रकारश्चेति द्वयोः समान इत्यधस्ताद् विविच्यमानः सन् सिध्यति।

कस्याश्चिदप्यवस्थाया ज्ञानस्वरूपनिर्भासस्यासत्त्व भ्रमत्व वा साकारवादिबौद्धैर्नाङ्गीक्रियते। उक्त च ज्ञानश्रिया—'**स्ववेदनेऽप्यनाश्वासः का वार्ता परवेदने**' ( पृ० ४६७ ) इति। एतदभिप्रेत्यैव रामानुजाचार्येणाप्यङ्गीकृतम्—'**यथार्थं सर्वविज्ञानमिति वेदविदां मतम्**' (पृ०६०) इति। अन्यत्र चोक्तमाचार्येण—'**स्वापमदमूर्च्छासु च सविशेष एवानुभव**' ( पृ० ६१ ) इति। '**स्वप्ने प्राणिनां पुण्यपापानुगुण भगवतैव तत्तत्पुरुषमात्रानुभाव्याः तत्तत्कालावसानाश्चार्था सृज्यन्त**' ( ०६०) इति च।

साकारविज्ञानवादेऽसम्भवादेव 'असत. ख्यातिर्भ्रम' इति मत नाङ्गीक्रियते, यतो हि यदसत् तन्न कथमपि प्रकाशत इति तेषा अभिप्रेतम् अतएव तन्मते असत्प्रतीतिः सदन्तरवशात् सती एव। अत्र उक्त च ज्ञानश्रिया—'**तत्त्वतस्तु सदन्तरमेवासत्, इष्टादन्यतया अलीकमुच्यते**' (पृ० ३९८) इति। एवमेव मायाख्यातिरपि तन्मते न युक्तिमती। यतो हि आकाराद् भिन्नो न कश्चिद् व्यापारो ज्ञानस्य, आरोप्यमाणश्चापि बाह्यार्थो बुद्धौ स्वरूपेणैव परिस्फुरति। स्वरूपपरिस्फुरणवशात्तु सत्यप्रतीतिरेव न मिथ्यार्थप्रतीति.। यथा चासत्ख्यातिः मायाख्यातिश्च न भ्रमस्तथा स्मृतिप्रमोषदृष्टिप्रमोषादयोऽपि वा न भ्रमकारणानि। साकारत्वादिबौद्धमते परपरिकल्पिता असत्ख्यातादय. सर्वा अपि भ्रमकल्पना साकारस्वसवेदनानङ्गीकृतावकाशाः, साकारनिर्भासवादे तु निरवकाशा एव। एतदेवोक्त ज्ञानश्रिया—

**परेण भासने दृष्टा विविधा भ्रमकल्पना।**
**स्वहेतोस्तु प्रकाशस्य निष्पत्तौ प्रभवन्ति न ॥**
**यद् यथा भासते ज्ञानं तत्तथैव व्यवस्थितम्।**
**नान्यत्र रूपमाधाय भासते ज्ञानमन्यथा ॥** इ[illegible]

"विज्ञानजात यथार्थम्" इति बौद्धवादमनुकुर्वता [illegible]
त्यन्तराणा दोषोद्भावनप्रकार साका[illegible]मत ए [illegible]
सत्ख्यातिः उभयोस्समानै[illegible] [illegible]। तथापि [illegible]
[illegible] स्वसम्प्रदायाधिगतत्रिवृत्[illegible]न [illegible]
इति सिद्धान्तबलात् वस्तुनो वैकल्यमा[illegible]च [illegible]।
तस्या बाधस्य च व्यवस्थान कृतम्। बाह्यार्थ[illegible]। [illegible]
विद्भिः सौगतैस्तु स्वसविदितत्वबलादेव सत्ख्यातिः प्रति[illegible]

इति तयोः प्रक्रियाभेदः। वस्तुतस्तु रामानुजाचार्यमतेऽपि ज्ञानस्य स्वविस्त्ववशादेव सत्ख्यातिरुपपादिता भवति। उक्तं श्रीभाष्ये-- "विषयाणामेव मिथ्यात्वं, तेषामेव बाधो दृश्यते न ज्ञानस्य" इति। अन्यत्र चोक्तम्--"मायाविनो मन्त्रौषधादिप्रभव मायामय ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः, तत्रापि ज्ञानस्याबाधितत्वादिति" च (पृ० ७३)। ज्ञानश्रियाप्युक्तम्—"केवलं स्वसवेद्यं परसवेद्यं वा प्रतिभासनमानमेव रूपमबाध्यमिति" (पृ० ४६८)। अत एव च तन्मतेन एक प्रमाण नान्येन बाध्यते इति सिद्धयति उक्त साकारसिद्धौ—

**प्रमाणस्य प्रमाणेन नापरस्यापि बाधनम्।**
**प्रागेवाध्यक्षरूपस्य स्वसंवित्तेस्तु का कथा॥**

इत्थ द्वयोरपि मते आलम्बनशून्यता न बाधार्थः सम्भवति, बुद्धीनामात्मनिर्भासत्वेन सर्वदापि तस्या. सालम्बनत्वस्वीकरात्। अत एवोक्त ज्ञानश्रिया—"केनचिदाकारपरिग्रहेण ज्ञानमिद जात न तु किञ्चिदनेन बाधित साधित वा नीलज्ञानानन्तर मधरज्ञानवत्" इति। रामानुजेनापि बुद्धिः सदा अबाधितैव स्वीक्रियते, अत एव तैः हस्त्यादीनामभावेऽपि कथ तद्बुद्धि. सत्येति प्रश्ने "बुद्धीना सालम्बनत्वमात्रनियमात्, अर्थस्य प्रतिभासमानत्वमेव हि आलम्बनत्वेऽपेक्षितम्, प्रतिभासमानता अस्त्येव दोषवशादिति" (श्रीभा०, पृ० ७४) उत्तरितम्।

( १० )

द्वयोरपि पक्षयोर्यद्यपि सवेदनस्वरूपे भ्रान्तिर्न स्वीकृता, तथापि प्रत्यक्षादीना दोषवशात् भ्रमव्यवहारः साध्यत एव। ज्ञानश्रिया च एकस्यापि ज्ञानस्य बाध्यबाधकभावः प्रत्यक्षादिदोषवशादेवेति अङ्गीकृतम्। उक्त साकारसिद्धिशास्त्रे—"एकस्य तु स्वविषयदाढर्च विरहे बाध्यबाधकभावः स्यात्। स्वविषये च दाढर्चमदाढर्च द्वयोः पर्यन्ते प्रत्यक्षस्यैव स्खलनेतराभ्याम्। प्रत्यक्षस्य च स्खलन विषये भ्रम एवेति" (ज्ञान०, पृ० ४६८)। प्रायोऽयमेव पक्षो रामानुजेनापि समर्थितः। उक्त श्रीभाष्ये (पृ० ७४)—"स तु बाधितोऽसत्य इत्यवसीयते, अबाधिता हि बुद्धिः सत्यैव" इति। इदमत्रावधातव्य भवति यत् साकारविज्ञानवादिभिर्दोषवशात् कथञ्चिद् विहितायामपि भ्रमव्यवस्थाया ज्ञाने आकारस्य बाधा कदाचिन्न स्वीकृता। उक्तम्—"बाधे-

नामनिमित्तानामाकारस्य च न क्षति·" इति (ज्ञानश्री०, पृ० ४०५)। अत एव कल्पितस्यैव ज्ञानाद्भिन्नस्य निषेधोऽवगन्तव्यो न प्रकाशस्य आकारस्य वा, तयोरव्यतिरेकितया प्रतिभासनात्। इत्थ द्वयोर्विषयाकाराध्यवसायात्मिकैव ख्यातिरिति पर्यवस्यति, तेन सर्व ज्ञान प्रमेति वैष्णवै·, अध्यवसायार्था ख्यातिसिद्धिरिति बौद्धैरङ्गीकृता। उक्त ज्ञानश्रिया—"ख्यातिरध्यवसायार्था बोद्धव्येति निराकुलम्" इति।

( ११ )

## द्वयोरद्वैतवादस्य भेदसहत्वम्

इत· प्राग् ज्ञानविषये साकारत्व-सविशेषत्व-तज्ज्ञानयाथार्थ्यप्रतिपादनेन द्वैतगर्भाऽद्वैतस्थिति. सम्भाविनी, तया च रामानुजीयेषु वैष्णवेषु भेदगर्भोऽभेद., बौद्धेषु च स्वसवेदनानतिरेकितया सविदद्वैते सिद्धेऽपि भेद. सिद्धयति। एवविधभेदस्वीकारादेव द्वयोरपि प्रस्थानयो. **भेदसहा** भक्तिरुन्मिषति विकसति च। यद्यपि भेदगर्भोऽभेदस्वीकार: जगद्याथार्थ्यवादिवैष्णवाना सुकरो, दुष्करश्च जगन्मिथ्यात्ववादिविज्ञानवादिबौद्धाना, तथापि ज्ञानाभिन्नत्ववादस्य साकारत्वप्रतिपादनमुखेनैवाद्वैते द्वैतस्थिति. साधीयसी भवति, इति हेतुवशादेव उत्तमर्णत्व साकाराद्वैतवादिबौद्धानाम्, अधमर्णत्व च सविशेषाद्वैतवादिवैष्णवाना स्पष्टीभवति। सकलेऽप्यस्मिन् विचारप्रसङ्गे बौद्धवैष्णवसम्मतो **जगन्मिथ्यात्ववादो** जगत्सत्यत्ववादो वा न कथमपि प्रतिपक्षभूत:।

अस्यामेव पृष्ठवर्तिन्या सविद्भूमिकायाम् अभेदे भेदसहिष्णूना वैष्णवाना साकारविज्ञानवादिबौद्धानुगामित्व परीक्षणीय भवति।

वैष्णवाना साकारविज्ञानवादानुगत्वप्रतिज्ञान वैष्णवेषु सगुणवतो भगवत: स्वरूपालोचनेन तत्कृत्येन च, महायानिबौद्धेषु बुद्धाना त्रिकायव्यवस्थया बुद्धकृत्येन च सप्रमाण भवति।

रामानुजाचार्याणा चिदचिदीश्वरेति त्रैतवादित्व सुप्रसिद्धम्। त्रिषु तत्त्वेषु परमार्थत. सत्स्वपि चिदचितो. परमपुरुषादीश्वरादपृथक्स्थिति:, तच्छरीरतयैव च तयो. सत्त्वमिति सम्प्रदाय:। अतएव रामानुजाचार्येण अभेद., भेदाभेदौ, भेदश्चेति सर्वमेव स्वीकृतम्।

उक्त वेदार्थसग्रहे (पृ० २१)—"सर्वशरीरतया सर्वप्रकार ब्रह्मैवा-

स्थितमिति **अभेद:** समर्थित । एकमेव ब्रह्मनानाभूतचिदचिद्वस्तुप्रकार नानात्वेनावस्थितमिति **भेदाभेदौ।** अचिद्वस्तुन. चिद्वस्तुनश्चेश्वरस्य च स्वरूपस्वभाववैलक्षण्यात् असङ्कराच्च **भेद:** समर्थित:" श्रीभाष्ये चापि—"भोक्तृभोग्यरूपेणावस्थितयो: सर्वावस्थावस्थितयो: चिदचितो: परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थिति परमपुरुषस्य चात्मत्वमाहु:" ( पृ० ६६ ) इति ।

इत्थ सर्वमीश्वरस्यात्मभूतम्, आत्मा च स्वयंप्रकाश:, स्वय प्रकाशकत्वाच्च स: ज्ञाता, सगुण:, सक्रियो भवति, न चात्मा कथञ्चित् प्रकाशमात्रम्, निर्गुणो निष्क्रियो वेति रामानुजीयवैष्णवाना मति: ।

अधिगतजगन्मिथ्यात्वज्ञानसाकारत्ववादिबौद्धैस्तु भेदोऽभेदो वा निर्भासमूल एव स्वीकृत: बाह्यमिथ्यात्ववशात् सविदव्यतिरिक्ततया भेदानामभासनाच्च एकस्या भेदगर्भाया: संविद एव सत्त्वमङ्गीकृतम् ।

एकस्यैव भासस्य द्वयात्मकत्वेन प्रतिभासनमिति साधयता ज्ञानश्रियाऽपि उक्तम्—

**यद् यदा भासते ज्ञानं तत् तथैवानुवर्त्तते ।**
**भासते द्वयात्मकत्वेन तथैवास्य सदा स्थिति: ।।**(ज्ञा मि ,पृ ४५४)

सर्वथाऽपि आकारवशाद् भेदगर्भोऽभेद: सिद्ध्यत्येव । एतत् सकलं पर्यालोच्य उक्तमत्र—

**निर्भासे सति भिन्नत्वमभेदो वा तदाकृते: ।**
**अभेदत्वे च निर्भास· तस्मादेकत्वमेव सत् ।।** ( पृ० ४५६ ) इति ।

# संघरक्षितः, तदीयः सुबोधालंकारश्च

डा० ब्रह्ममित्रः अवस्थी

भारतवर्षीये ऐतिह्ये अशोकप्रभृतीना बौद्धधर्मपरिपोषकाणा राज्ञा कालः सुविस्तीर्णः समुन्नतश्चोपलभ्यते, तद्दिनेषु भारतवर्षे पालिभाषाया महत्त्व न केषामप्यविदितम्। तद्दिनेषु पिटकग्रन्थैः सह विविधविषयकाणा ग्रन्थाना रचना पालिभाषाया कृता भवेदित्यपि न सन्देहास्पदम्। परमद्यत्वे काव्यशास्त्रीयाणा काव्यग्रन्थाना अनुसधानप्रसङ्गे नैराश्यमेव प्रायशोऽवाप्यते। काव्यशास्त्रीयेषु ग्रन्थेषु केवलं सघरक्खितकृत सुबोधालकारमेव वयं प्राप्नुम ।

**संघरक्षितः**

सघरक्खितोऽय **मोग्गलान** नाम्ना सुप्रसिद्धात् महावैयाकरणादभिन्न इति मेजर जी० ई० फ्रेयर महाभाग प्रतिपादयति। एतस्य द्वितीय नाम **मेधंकर** इति, यो हि सिहल(सीलौन)देशीयायाम् उदुम्बरगिरिविहारीयाया भिक्षुपरम्पराया त्रयोदशशतके **शीलथेरे**त्यपराभिधस्य सारिपुत्रमहाभिक्षो शिष्यो बभूव।

सिहलदेशीयस्य प्रसिद्धस्यैतिह्यविद आर्यपालस्येद सुनिश्चित मत यदसौ द्वितीयस्य पराक्रमबाहो शासनकाले बभूव, दिवगते च तस्मिन् तृतीयस्य विजयबाहो शासनकाले ( सन् १२२७–१२३१ ई० ) डिम्बूलागल मेघकरस्य साहाय्येन सघरक्षित एका विद्वद्सगीतिमायोजितवान्, यत्र धार्मिकपुस्तकाना सशोधन विहितम्।

"हिस्ट्री ऑफ सीलोन" ग्रन्थस्य लेखकानामिदमभिमत यदाचार्य-संघरक्षित. राज्ञा पराक्रमबाहुना सादर तृतीयाय विजयबाहवे समर्पितः। अस्यैव च शासनावसरेऽय गुरौ सारिपुत्रे दिवप्रस्थिते संघस्य **महाथेरा** ( महास्थविर ) पदमभजत्। अत. सघरक्खितस्य स्थितिकाल. त्रयोदशशतकस्य पूर्वार्धे सुनिश्चित इति वक्तु शक्यते।

एतत्कृताना वुत्तोदय-सम्बन्धचिन्दा-सुसद्दसिद्धि-योग-विनिच्चय-

खुद्दकसिक्खाटीका-सुबोधालकाराणा विवरणमुपलभ्यते । तेषु वुत्तोदय-सुबोधालकारौ साहित्यशास्त्रीयौ, सम्बन्धचिन्ता शब्दशक्तिविषयक., सुसद्दसिद्धिः व्याकरणविषयक., खुद्दकसिक्खाटीका योगविनिच्चयौ च बौद्धधर्मविषयकौ ।

साहित्यशास्त्रीययोः वुत्तोदय-सुबोधालकारयो. वुत्तोदये छन्दसा लक्षणानि उदाहरणानि च न्यस्तानि, सुबोधालकारे च काव्यलक्षण-दोष-गुणालंकार-रसादीना प्रायश. सर्वेषामपि काव्यतत्त्वाना विवेचनं कृतमस्ति ।

**सुबोधालंकारः**

एकसप्तत्युरत्रिशतकारिकात्मकः अय ग्रन्थः पञ्च परिच्छेदेषु विभक्तः । तत्र प्रथमे काव्यलक्षण-दोषाणा द्वितीये दोषपरिहारोपायाना तृतीये गुणाना चतुर्थेऽलंकाराणा पञ्चमे च विभावानुभावसात्त्विकव्यभिचारिभिः सह नव रसाना विवेचन कृतमस्ति । ग्रन्थस्यास्य रचनायां सघरक्खितस्य विशिष्ट प्रयोजन मागधभाषायाः ( पालिभाषायाः ) माध्यमेन काव्यशास्त्रीयाणा विषयाणा परिचयप्रदानमस्ति । अत्र विषयेऽसौ पूर्वाचार्यैः स्वीकृतान् सिद्धान्तान् यथेष्टमुपायुङक्त । यद्यपि रामशर्माणमतिरिच्य न कमपि नामग्राहमुल्लिलेख । रामशर्मा च काव्यालकारकृता भामहेनाऽप्यनेकधोल्लिखितः ।

हेरम्बनाथचटर्जीप्रभृतयः द्वित्रा. विद्वास. सघरक्खितकृत सुबोधालकार दण्डिनः काव्यादर्शमाश्रित्य विरचित विशेषत. तस्यानुवादभूत मन्यन्ते, पर न तत्समीचीनमनेकश. दण्डिना सह तद्विरोधात् । तथाहि भामहसकेतितान् मेधाव्युद्भावितान् सप्त उपमादोषान् दण्डी न स्वीकारोति सघरक्षितश्च सादर मेधाविन स्मरन् तान् वर्णयति । उपमालकारप्रसङ्गे दण्डी धर्मोपमाप्रभृतीन् द्वाविशतिरुपमाभेदान् वर्णयति सघरक्षितश्च तेषु भामहेन अस्वीकृतान् षड् भेदान् परित्यज्य शेषानेव चतुर्दश वर्णयति । अतिशयोक्त्यलंकारलक्षणे दण्डी लोकसीमातिवर्तिन. विशेषस्य विवक्षामनिवार्याम्मनुते, सघरक्षितस्तु लौकिकातिशयोक्तिमप्यतिशयोक्तिभेदेषु अन्यतमामगीकरोति । रूपकालकारभेदविवेचनप्रसगे दण्डी वाक्यसंघटनामाश्रित्य समस्त-

व्यस्तभेदान् सर्वप्रथम स्वीकरोति, संघरक्षितस्तु भामहमनुसरन् आरोप्यमाणारोपविषययोरभिधानविषया पूर्णतामल्पतामाश्रित्य समस्त-वस्तुविषय-एकदेषविवर्तिनामभ्यां मुख्यत. भेदद्वयमेवमङ्गीकरोति। सुप्रचलिताम् परम्परामाश्रित्य रूपकालकारस्यानन्तान्भेदान् तेषु च समासोक्तरूपकस्य चर्चा कुर्वन्नपि न तेषां विशिष्य महत्त्वमङ्गीकरोति। अलकाराणा नामविषये विवेचनक्रमे च दण्डिसघरक्खितयोः महद् वैमत्यम्। संघरक्षितकृतस्य रसभावादिविवेचनस्य तु दण्डिकृते काव्यादर्शे सुतरामभाव इति न कथमपि दण्डिनोऽनुकरणमनुवादो वा सुबोधालकारे इति चटर्जीमहाभागस्य धारणा भ्रान्तैव प्रतिभाति। यत्र कुत्रचिद्द्वयोः ऐकमत्यम् साम्यं वा प्रतिभाति तद् वर्ण्यविषयमहिम्ना एव। परम्परा-गतः प्रभावश्च तत्र भामहस्य तदनुवर्त्तिना वा, न दण्डिन ।

आचार्यः सघरक्षित. काव्यपदस्य स्थाने सामान्यतः बन्धपद प्रयुक्ते यस्य च प्रयोगः भरतकृते नाट्यशास्त्रेऽनेकधा समुपलभ्यते। बन्धश्च दोषरहित शब्दार्थसाहित्यम्। स च गद्य-पद्य-मिश्रभेदात् त्रिविधः सघरक्षितमते।

भामहीया परम्परामनुसरन् सघरक्षितः काव्य ( बन्ध ) सर्वथा दोषरहित कामयते, दुष्ट काव्य च दोषयुक्ता कन्यामिव विद्वद्भिरना-दरणीया मनुते। भामहोऽपि दुष्ट काव्य दुःसुतमिव निन्द्य मेने। सति च दोषाभावे तत्र गुणा स्वयमेव प्रतिष्ठा भजन्ते। दोषभेद-प्रसंगे संघरक्षितः वामन इव प्रथमं. पद-वाक्य-अर्थ-भेदेन त्रीन् `दा-नंगीकृत्य विरुद्धार्थान्तर-अध्यात्मक्लिष्ट-विरोधि-नेय्य-विशेषणापेक्ष्य-हीनार्थक-अनर्थकानष्टपददोषान्, एकार्थक-भग्नरीति-अव्याकीर्ण-ग्राम्य-यतिहीन-क्रमच्युत-अतिवृत्ति-अपेतार्थ-सम्बन्धपरुषान् नव वाक्य-दोषान्, अपक्रम-औचित्यहीन-भग्नरीति-सशय-ग्राम्य-दुष्टालकृतीन् षड् अर्थदोषान् वणयति। दोषपरिहारविषये दण्डिभामहसंघरक्षितेषु त्रिष्वपि न वैमत्यम्, केवल दण्डिभामहौ दोषविवेचनं ग्रन्थान्ते कुरुतः संघरक्षितस्तु ग्रन्थादौ इति विशेषः।

गुणविवेचनप्रकरणे सघरक्षितः भरतप्रवर्तितां दण्ड्यनुगता परम्परामनुसरन् प्रसाद-ओजो-मधुरता-समता-सुकुमारता-श्लिष्ट-उदारता-कान्ति-अर्थव्यक्ति-समाधीन् दशगुणान्वर्णयति। अत्रापि च भामहस्वीकृतान् ओजः-प्रसाद-माधुर्यान्; प्रथमं वर्णयित्वा

तदस्वीकृतानपि स्वबुद्ध्याभिमनान् श्लेषादीन् वर्णयति। अत्र प्रसगे भामहीयपरम्परानुवर्तिनोप्यस्य विचारस्वातन्त्र्य सुतरामभिज्यते।

अलकारविवेचनप्रसंगे दण्डिभामहप्रभृतिभि· पूर्ववर्तिभिराचार्यै. शब्द-अर्थभेदाद् द्विविधा अलंकारा अगीकृता·। सघरक्षितः काव्य-शास्त्रीयाचार्यपरम्परासु प्रथमः, य. शब्दालकारान् सर्वथा उपेक्ष्य केवलमर्थालंकारानेव वर्णयति। उत्तरवर्तिभि. सस्कृतकाव्यशास्त्रीयैः शोभाकरमित्र-अप्पयदीक्षित-जगन्नाथ-विवेश्वर-भट्टदेवशकरप्रभृतिभिरा चार्यै. शब्दालकारानुपेक्ष्येयमेव परम्परानुवर्तिता।

सघरक्षितेन स्वीकृता अर्थालकारास्त्रयस्त्रिशत्, ते चेमे—'उपमा-रूपकम्, आवृत्तिः, दीपकम्, आक्षेप, अर्थान्तरन्यासः, व्यतिरेकः, विभावना, हेतु, क्रम·, प्रियतरम्(प्रेयान्),समास, वृत्ति (समासोक्ति), परिकल्पना (उत्प्रेक्षा), समाहितम्, पर्यायवृत्तिः (पर्यायोक्तम्),व्याज-वर्णनम् (व्याजोक्तिः), विशेष· (विशेषोक्तिः), रूढालकृति (ऊर्जस्वी), श्लेषः,तुल्ययोगिता,निदर्शना,महन्तर्थम्(उदात्तम्),वचना(अपह्नुति), अप्रकृतस्तुति· (अप्रस्तुतप्रशसा), एकावली, अन्योन्यम्, सहवृत्ति (सहोक्ति·),भ्रमः(भ्रान्तिमान्),भाव·,मिश्रम् (सकरससृष्टि·), आशी. रसवदि'—ति।

अत्र स्वीकृतेषु महन्तर्थ-भ्रम-रूढालंकाराः भामहेन उदात्त-ससश-योर्जस्विनामभिः अगीकृताः, दण्डिना च न वर्णिता·। हेतु दण्डिना स्वीकृतः भामहेन च निषिद्ध·। एकावली-अन्योन्यौ चोभाभ्यामपि न वर्णितौ। वचना-परिकल्पने द्वाभ्यामपि अपह्नुत्युत्प्रेक्षानामभ्या स्वीकृतौ। प्रियतर-समासवृत्ति-भाव-मिश्रा. अलकाराः यद्यपि स्वीकृताः परन्तु तत्र नामसु वरीवर्ति कश्चिदल्पीयान् भेदः। अत्र सघरक्षितेन प्रयुक्ताना अलकारनाम्नां अवलोकनेनेद वक्तु नाति-दुष्करं यदसावाचार्यः सघरक्षितः दण्डिनः काव्यादर्श नानुवदति अनुकरोति वा। सः सर्वत्रापि पूर्ववर्तिभि. स्वीकृतान् सिद्धान्तान-वलोक्य विषयौचित्याद् आददाति जहाति वा तान्। तत्र सम्भवति कस्यचित् प्रभावश्चेद् ग्रन्थादौ स्मृतस्य रामशर्मण। पर तदीयग्रन्थ-स्याद्याप्यनुपलम्भात् तत्रापि किमपि वक्तु सर्वथा दुःसाहसमात्रम्।

सुबोधालकारस्यान्तिमे परिच्छेदे सघरक्षित· रसादीना परिच-यात्मक विवरणमुस्थापयति। अत्र प्रसंगेऽसौ विभानुभावसात्त्विक-व्यभिचारिभावाना परिभाषाः नामानि चोपनिबध्नाति। तत्स्वी-

कृतानि नामानि परिभाषाश्च भरतमनुसरन्ति, रसानुभूतिसिद्धान्तश्च नाट्यशास्त्रव्याख्यातारमाचार्यमभिनवगुप्तम्। रसा एतेन श्रृंगारादयो नव स्वीकृता। श्रृगाररसस्य भेदोपवर्णनप्रसगे एतदीयाः मान्यता. सर्वथा मौलिका। तथाहि प्रायशस्सर्वैरपि आचार्यैः श्रृंगारः द्विविधः प्रोक्तः, संभोग-विप्रलम्भभेदात्। एतन्मते तु सः ( श्रृंगार ) त्रिविधः अयोग-विप्रयोग-सभोगभेदात्। हास्यरसमसौ षोढा विभजते। ते च भेदा अभिनवगुप्तस्वीकृतेभ्यो भेदेभ्यो भिन्ना एव।

अत्र सुबोधालंकारे दोष-गुणालंकारादीनामुदाहरणानि तत्कृतान्येव येन तदीयकवित्वप्रतिभा सुतरा ज्ञातु शक्यते। प्रायशः सर्वेष्वपि पद्येषु भगवन्त बुद्धं प्रति भक्तिभावः ध्वनितो भवति। यत्र तत्र च पद्येषु दण्डिप्रभृतीनां सस्कृतभाषायाः कवीनां प्रभावोऽपि परिलक्ष्यते तत्र सामान्यतः शब्दबन्धानामेव, येन तस्य स्वाध्यायशीलतावगन्तुं शक्यते।

अत्र ग्रन्थेऽद्यावधि पचटीकाना विवरणमुपलब्धम्। तेषु प्रथमा सिंहलदेशीयेन सारिपुत्तशिष्येण वाचिस्सरनामकेन बौद्धभिक्षुणा त्रयोदशशतस्योत्तरार्धे विरचिता। द्वितीया "पच्चय दीपनी" ब्रह्मदेशीयबौद्धभिक्षुणा सद्धम्मयाणेन चतुर्दशशतके लिखिता। तृतीया "अलकार निस्सय" नाम्नी टीका विन्दामिसिरनामकेन भिक्षुणा एकोनविशतितमेशतके ( वि० १८७२ ) लिखिता। इद टीकाद्वय ब्रह्मदेशे बुद्धशासनसमित्या प्रकाशितम्। हेरम्बनाथचटर्जीमहाभाग सिंहलदेशे ताडपत्रेषु लिखितामपरामप्येकामप्रकाशिता टीका निर्दिशति। एकश्चानुवादः बगीयभाषाया भिक्षुणा अय्येवशेन कृतः, १९४८ खिस्ताब्दे कलिकातः प्रकाशितश्च परमसावनुवादः विषयविवेचनदिशा विशदीकरणदिशा वा न सन्तोषमावहति।

पालिवाङ्मयेऽद्यावधि समुपलब्ध एक एवायमलकारग्रन्थः बौद्धकाव्यशास्त्रपरम्परायाः द्वारमिव निस्सशयमत्र शास्त्रे विशिष्टम्महत्त्वमावहति। एतद्ग्रन्थस्य एतदीयटीकाना च प्रकाशनेन निस्संशयं कापि रिक्तता समाप्ति यायादिति द्रढीयान् मे विश्वास ।

# अकथिताकर्मकशब्दौ

डा० जानकीप्रसादद्विवेदी

## १. अकथितम् ( पारिभाषिकशब्दः )

नञ् + कथ् + क्तः ( निष्ठा ३ । २ । १०२ ) । त्रि–लि० । अनभिहितः = अनुक्तः पदार्थः अकथितशब्देनोच्यते । पाणिनीय-व्याकरणे—अपादानादिभिर्विशेषैरनभिहितस्य कारकस्य बोधाय अकथितशब्दः प्रयुक्तः । तथाविधस्याकथितकारकस्य कर्मसंज्ञा क्रियते—**अकथितं च** इति ( अष्टाध्यायी १।४।५१ ) । यस्य पदार्थस्य विषये न कश्चित् प्रश्नः, न चोत्तरमेव जातः स पदार्थः अकथितो भवतीति महाभाष्यकारो व्याचष्टे[1] । अत्र अकथितशब्दे भूतकालो न विवक्षितः, तेन कर्मसंज्ञाऽनन्तरं प्रोक्ताभ्यां कर्तृ—हेतुसंज्ञाभ्यामपि अकथितं कारकं कर्मसंज्ञं भवति । कर्तृहेतुसंज्ञयोः प्रवृत्तिस्थले तु कर्मसंज्ञा न प्रवर्तते । सूत्रकारस्य महर्षिपाणिनेराशयं विशदयन् महाभाष्यकारः अकथित-कर्मणः स्थलानि निर्दिशति—

**दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।**
**ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं कविना ॥** इति ।

उपयुज्यते यः पदार्थः 'पय' आदिः स उपयोगशब्देनात्र गृह्यते । तथाविधस्योपयोगस्य निमित्तभूतं गवादि कारकम्; ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टाविति धातुद्वयस्य गुणरूपेण धर्मादिना सबद्धं च कारकमत्र अकथित = अकीर्तितशब्देन गृह्यते, तस्य च कर्मसंज्ञेष्यते । उक्तमेतादृशं कारकं तदैवाकथितं भवति यदा अपादान-संज्ञाऽऽदिः कश्चिद् विधिस्तत्र पूर्वं न प्रवर्तते ।

'पाणिना कांस्यपात्र्यां गां पयो दोग्धि' इत्यत्रोपयोगभूतस्य पयसो निमित्तं पाणिः कांस्यपात्री च वर्तते, पाणिकांस्यपात्रीभ्यां विना उप-योगस्य पयसः प्राप्तेरशक्यत्वात् । पाणेः करणत्वं कांस्यपात्र्याश्चाधि-

---

१. प्रश्नप्रतिवचनाभ्यां चासंकीर्तितवचनोऽकथितशब्दः ।

( —महाभाष्यम् १।४।५१ )

करणत्वं विवक्ष्यते इत्येतेन तत्र क्रमेण तृतीया सप्तमी च विभक्तिः प्रवर्तते। एव यदपि गौरत्रावधिस्तत. पयसो विभागप्रवृत्तेः, तेन गोरपादानत्व प्रवर्तेत, तन्न। अत्र गोरवधित्व न विवक्षितम्, किं च निमित्तत्वमेव विवक्षितम्। तत्र च अपादानादेरप्रवर्तनाज्जायते कर्मसंज्ञेति विवेकः कर्तव्य ।

महाभाष्यकारेणोक्ते श्लोके चकारेणान्यत्रापि कर्मसंज्ञा इष्यते। तथाहि--

**नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च।**
**द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः॥**

(महाभाष्यम्–श्लोकवार्त्तिकम्)

अत्रापि पठितेन चकारेण किञ्चिदन्यदपि समावेश्यते। एवप्रकारेणाकथितकर्मणः कृत्स्न लक्ष्य भट्टोजिदीक्षितेन संगृहीतम्--

**दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासिजिमथ्मुषाम् ।**
**कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥**

(सि० कौ०, कार० प्रक०, पृ० ५२०)

प्रक्रियाकौमुदीकारेण पाणिनिसूत्रव्याख्याकारेण चोक्तस्याकथितकर्मण उद्धरणानि भट्टिकाव्यादिग्रन्थेभ्य सकलय्य प्रदर्शितानि (प्र० कौ०, पृ० ३८६–६२, पा० सू० व्या०, पृ० ५३-५६)।

अकर्मकधातुभिर्युक्त कालाद्यपि किञ्चित् कीर्त्यते-अकथितमिति। अकथितत्वात्तस्य जायते कर्मसंज्ञा—

**कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्।**
**देशश्चाकर्मकाणां च कर्मसंज्ञा भवन्ति च[1]॥**

(म० भा० श्लो० वा०)

अत्रेदमवधेयम्—अकथितत्वात् काल. कर्मसज्ञो भवतीत्युच्यते, तत्फल द्वितीयायाः प्रवृत्तिः (**कर्मणि द्वितीया** २।३।२)। सा च '**कालाध्वनोरत्यन्तसंयोगे**' (२।३।५) इति सूत्रेण सभाव्यते एवेति किं फलं तावत् कालस्याकथितत्वाऽऽख्यापनस्य? 'आस्यते मास, आसितव्यः, स्वास.' इत्यादौ कर्मणि ल-कृत्य-खलर्थाना प्रत्ययाना

१. द्र०—वा० प० ३।७।६७-७३

विधानाय कालस्याकथितत्वख्यापनपुरस्सर कर्मसंज्ञा विधीयते। **काला-ध्वनोरत्यन्तसंयोगे** ( २।३।५ ) इति सूत्रेण कर्मसज्ञके काले नो प्रवर्तते द्वितीयाविभक्तिरिनि।

अकथितकारकस्य कर्मसंज्ञेयमर्थनिबन्धना इति व्याख्याकारैरङ्गी-क्रियते। एतेन 'याच्' इत्याद्यर्थकस्य भिक्षादिधातोरपि प्रयोगे अपा-दानादिभिरनुक्तस्य कारकस्य कर्मसज्ञा प्रवर्तते—'बलिं भिक्षते वसुधाम्' इत्यादौ। 'अहमपीदमचोद्य चोद्ये' (म० भा० २।४।६२) इति महा-भाष्यकारप्रयुक्तवचने प्रच्छिपर्यायश्चुदधातुर्द्विकर्मको दृश्यते, तेनोक्त परिकल्प्यते। • महाभाष्यकारेण येषा 'जि—दण्डि' इत्यादिधातूना द्विकर्मकत्वं नोक्त तेषामन्तर्भावितण्यर्थविवक्षायामेव द्विकर्मकत्वमङ्गी-करणीयमिति व्याचक्षते व्याख्यातार. (द्र०—बालमन० १।४।५१)।

## २. अकर्मकः ( पारिभाषिकशब्द. )

नास्ति कर्म यस्यासावकर्मकः। नञ् + कर्मन् + कप् ( **शेषाद् विभाषा** ५।४।१५४)। फलं यदा व्यापारेण सम्पृक्त तत्र पृथङ् न प्रतीयते पृथग् वक्तु नापेक्ष्यते वा तदा धातुरकर्मको भवतीति शाब्दि-काना निश्चयः 'फलव्यापारयोरेकनिष्ठतायामकर्मकः'[1] इति। वस्तुत सर्वे धातव सकर्मका भवन्ति।

धातूनामकर्मकत्वे कानिचित् कारणानि भर्तृहरिणा निर्दिष्टानि। तथा हि—

**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।**
**प्रसिद्धेरविवक्षात कर्मणोऽकर्मिका क्रिया॥**

(वाक्यपदीयम् ३।७।८८) इति।

१—यदा धातुर्निर्दिष्टादर्थाद् भिन्नेऽर्थे वर्तते, यथा वह् धातोः प्रापणमित्यर्थः 'पुरुषो भार वहति' इत्यादौ दृश्यते, 'नदी वहति' इत्यादौ तु न तथाविधः। भारस्य वहनक्रिया नद्यश्च वहनक्रिया न समानरूपा कि च भिन्नरूपैवावलोक्यते। एवमर्थान्तरे वर्तनात् 'नदी वहति' इत्यत्र प्रयुक्तो वह्धातुरकर्मक. सजायते।

---

१ वाक्यपदीयनाम्ना वाचस्पत्यकोशादावनेकत्रोद्धृतमेतद् वचन मया वाक्यपदीये नावाप्तम्।

•२—धात्वर्थक्रिययैव कर्मार्थस्य सग्रहणात्, यथा—'शयनं करोति' इत्येवार्थः 'शेते' इति क्रिययैव ज्ञायते। अनयोरर्थयोरभिन्नत्वात् क्रियाया पृथक् कर्मकारकं न प्रयुज्यते इति शीङ्धातुरकर्मकः।

३—प्रसिद्धं कर्म किञ्चिदुद्दिश्य यदा काचित् क्रिया प्रयुज्यते, यथा—'मेघो जलं वर्षती'ति लोके प्रसिद्धिः, तदर्थप्रकाशनाय जलरूप-कर्मणः पृथक् कथनस्य नाऽऽवश्यकता। एतेन तत्र प्रयुज्यते—'मेघो वर्षति' इत्येव। अभिप्रायविशेष कञ्चिद् द्योतयितु तु 'मेघो रुधिर वर्षति' इत्यादौ कर्म प्रयुज्यते एव।

४—यदा वक्ता कर्म न प्रयुङ्क्ते, यथा—'नेह पच्यते, नेह भुज्यते'; 'इह पाको न क्रियते, इह भोजन न क्रियते'। इत्येवं प्रकारेणोक्ते वचने यदपि पाको भोजन च कर्मैव भवति तथापि तत् कर्मद्वयं वक्तु नेष्यते प्रयोक्त्रा इति पचादिधातवोऽकर्मकाः सम्पद्यन्ते।

१—पाणिनीयाष्टाध्याय्यामकर्मकधातुभ्यो भावे कर्तरि च तिबा-दिप्रत्यया विहिताः—**लः कर्मणि च भावे चाकर्मकेभ्यः** (३।४।६९)। भावे—आस्यते देवदत्तेन। कर्तरि—आस्ते देवदत्तः। भावार्थे जातेन क्तप्रत्ययेन भाव उक्तो भवति, कर्त्ता चानुक्तः, अनुक्तत्वात् कर्तरि **कर्तृकरणयोस्तृतीया** ( २।३।१८ ) इत्यनेन तृतीया विभक्तिर्जायते। कर्त्रर्थे जातेन तप्रत्ययेन कर्ता उक्तो भवतीति तत्र न जायते तृतीया।

२—कतिपयाकर्मकेभ्यो धातुभ्य आत्मनेपद विधीयते—

(क) **अकर्मकाच्च** ( १।३।२६ )। यावद् भुक्तमुपतिष्ठते। भुक्त-मित्यत्र क्तप्रत्ययस्य अर्थः 'भावः' इति।

(ख) **अकर्मकाच्च** (१।३।३५)। विकुर्वन्ते सैन्धवाः।

(ग) **अकर्मकाच्च** (१।३।४५)। सर्पिषो जानीते।

घृतभक्षणे आसक्तः पुरुषो घृताभावे भोजन कर्तुमसर्थः। अथ च घृतरूपो यो हि उपायस्तेन भोजनक्रियायां प्रवर्तते स.। एवं सर्पीरूप उपायोऽत्र करणम्, करणत्वेन सर्पिषो विवक्षायां सत्या ज्ञाधातुर-कर्मकोऽत्र वर्तते[1]।

---

१ यस्य सर्पि ष्वभिष्वङ्गो विना तेन भुजिक्रियायामभिलाषा न भवति, तस्य भोजने प्रवृत्ति प्रति सर्पिरुपायभावं प्रतिपद्यते इति तेनोपायेन स. प्रवर्तते इति [ न्यास. १।३।४५ ]।

(घ) **अनोरकर्मकात्** (१।३।४९)। अनुवदते कठः कलापस्य।

३—अकर्मकेभ्यः क्वचित् परस्मैपद विधीयते—

(क) **विभाषाऽकर्मकात्** (१।३।८५)। यावद्भुक्तमुपरमति, यावद् भुक्तमुपरमते।

(ख) **अणावकर्मकाच्चित्तवत्कर्तृकात्** (१।३।८८)। आस्ते देवदत्तः, आसयति देवदत्तम्।

४—अकर्मकधातोरण्यन्तावस्थाया यो हि कर्ता स ण्यन्तावस्थायां कर्मरूपतामाप्नोति— **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ** (१।४।५२)। शेते देवदत्तः, शाययति देवदत्तम्।

५—युच्प्रत्ययः—**चलनशब्दार्थादकर्मकाद् युच्** (३।२।१०८)। चलनः, शब्दनः।

६—क्तप्रत्यय —**गत्यर्थाकर्मकश्लिषशीङस्थासवसजनरुहजीर्यतिभ्यश्च** (३।४।७२)। ग्लान, म्लानः।

७—गुणकार्यम्—**मुचोऽकर्मकस्य गुणो वा** (७।४।५७)। मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्स स्वयमेव।



# लक्षणावृत्तिः

## श्रीवायुनन्दनपाण्डेयः

यद्यपि प्रशस्तप्रतिभाप्रगल्भाना गवेषकाणा विद्वत्तल्लजाना सूक्ष्मेक्षिकयाऽक्षुण्ण किमपि वस्तु कस्मिंश्चिदपि शास्त्रे न वर्तते, यस्य विवेचने आधनिकाना प्रयासो नवीनतामियात्, तथापि प्राचीनसरणिमनुरुन्धाना वस्तुतत्त्वसमीक्षणपटवो यथामति वस्तुजातं सहृदयहृदयावर्जक विमृश्य अन्विष्य लोकलोचनगोचरीकृत्य कमपि नवीन पृथग्भूतफलाकृतिरसमास्वादयन्ति विदग्धान् । आवश्यकञ्च समये समयेऽनुसन्धानपद्धत्या विषयविवेचन स्फुटत्वोपलब्धये विषयस्येतिकृत्वा लक्षणाविषये जनोऽय स्वानुभूति लेखेन प्रकटयितुमुपक्रमते ।

तत्र अज्ञातवृत्तिकस्य, विस्मृतवृत्तिकस्य, तद्वाचकपदाज्ञानवतो वा शाब्दबोधादर्शनात् घटपदादे. समवायसम्बन्धेन सम्बन्ध्याकाशविषयकोपस्थितिबलादाकाशविषयकशाब्दबोधवारणाय च तद्धर्मावच्छिन्नविषयकशाब्दत्वाऽवच्छिन्न प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञान हेतुः । अत्र घटादिपदात् घटविशेष्यकघटत्वप्रकारकस्येव घटप्रकारकघटत्वविशेष्यकशाब्दबोधस्य वारणाय तद्धर्मावच्छिन्नेति । ज्ञाने वृत्तिवैशिष्टयञ्च स्वविषयकोद्बुद्धसस्कारसमानाधिकरण्य, स्वाश्रयपदविषयकत्वोभयसम्बन्धेनेति । अत्र कारणदलघटकवृत्तित्वम्, शाब्दबोधजनकोपस्थितिजनकज्ञानविषयसम्बन्धत्वमिति । अर्थात् शाब्दबोधजनिकाया उपस्थिति., तज्जनक यद्वृत्तिज्ञानं तस्य विषयो वृत्ति. सा च पदपदार्थयोः सम्बन्धरूपेति । केचन शाब्दबोधजनकपदपदार्थसम्बन्धत्वं वृत्तित्वमित्यङ्गीकुर्वन्ति । न च एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति, इति रीत्या पद सम्बन्धेन पदार्थं स्मारयति नतु शाब्दबोधं जनयति इति शाब्दबोधजनकेत्यादिवृत्तिलक्षणमनुपपन्नमिति वाच्यम्, तेषा मते पदादपि शाब्दबोध एव नतु स्मृतिः, अन्यथा अवान्तरवाक्यार्थबोधानन्तरं पदार्थस्मृतेः नष्टत्वान्महावाक्यार्थबोधो न स्यादिति । एवञ्च 'गुड' इत्युक्ते मधुरत्वं न शब्दजप्रतीतिविषयः, किन्तु अनुमेयम्, मानस

वेत्यन्ये, (आलङ्कारिकाणा मते व्यञ्जनाजन्यम् इति)। इत्थं पदपदार्थयोः सम्बन्धरूपाया वृत्तौ निर्णीतायां पदस्य मुख्यार्थे एव सम्बन्धः, लक्ष्यार्थे तु शक्यस्य सम्बन्धोऽनोऽभिधैव शब्दस्य वृत्तिर्न-लक्षणेति न भ्रमितव्यम्, शक्यसम्बन्धस्य स्वप्रतियोगिवाचकत्व-सम्बन्धेन पदेऽपि सत्वात्। पदपदार्थयोः साक्षात् सम्बन्ध एव वृत्ति-रिति तु वक्तु न शक्यते, ईश्वरेच्छारूपायामिच्छारूपायां बोधजनक-तारूपाया वा शक्तौ व्यभिचारात्।

वस्तुतः वर्तते शब्दोऽर्थे प्रवर्ततेऽनयेति वृत्तिरितिविवरणात् शब्दस्य स सामर्थ्यरूपो व्यापारो विवक्षितो येन शाब्दबोधहेतुभूतपदजन्य-पदार्थोपस्थितिर्भवति। (व्यापारश्चात्र साक्षात्परम्परासम्बन्धेन वाऽपर-सम्बन्धिस्मारकत्वरूप·)। इत्थञ्च शक्यसम्बन्धेन सम्बन्धिनोऽर्थस्य स्मारकत्वाल्लक्षणापदवृत्तिरित्यत्र न केषाञ्चिदपि विमतिः। शब्द-वृत्तिविषये पदवाक्यप्रमाणज्ञा वैयाकरणमीमासकनैयायिकास्तथा चत-सृणां विद्याना निष्यन्दभूतसाहित्याम्भोधिमन्थनोत्थरत्नालङ्कृता आलङ्कारिकाश्च प्रमुखविवेचकाः सन्ति। तत्र नैयायिकास्तावत् शक्ति-र्लक्षणा चार्थेपदवृत्तिरितिप्रतिपादयन्त्येव। भाट्टमीमासकास्तु लक्षणां न केवला पदवृत्तिमपि तु वाक्यवृत्तिमपि मन्वते। त एवमभिदधति यत् वाक्यार्थप्रतिपादनाय पदानि प्रयुञ्जते, पर पदानि साक्षात् वाक्यार्थप्रतिपादनं न कुर्वन्ति, प्रत्युत स्व स्वमर्थ प्रत्याय्य विरतानि भवन्ति, अनन्तर पदार्थसामर्थ्याद् वाक्यार्थबोधो भवति, यथा पाकार्थ-मिन्धनप्रयोगः, इन्धनानि च ज्वालामुत्पादयन्ति, तया ज्वालया पाकोभवति[1] इति। स्फुटञ्चैतदेवोक्त भाष्यकारैः श्रीशबरस्वामिभिः— यत्पदानि स्वस्वमर्थमभिधाय निवृत्तव्यापाराणि पदार्था अवगताः सन्तो

---

१. श्रीकुमारिलभट्टपादा आहु श्लोकवार्तिके—

न विमुञ्चन्ति सामर्थ्यं, वाक्यार्थेऽपि पदानि नः।
वाक्यार्थो लक्ष्यमाणो हि, सर्वत्रैवेति च स्थितिः॥
साक्षाद्यद्यपि कुर्वन्ति, पदार्थप्रतिपादनम्।
वर्णास्तथापि नैतस्मिन्, पर्यवस्यन्ति निष्फले॥
वाक्यार्थमितये तेषा प्रवृत्यानान्तरीयकम्।
पाके ज्वालेव काष्ठानां, पदार्थप्रतिपादनम्॥

वाक्यार्थं गमयन्ति। न्यायरत्नमालायामपि-वाक्यार्थो लाक्षणिक इति मीमासका इत्युक्तम्। प्रभाकरस्तु वाच्य एव वाक्यार्थ इति मनुते।

वैयाकरणेषु प्राचीना· लक्षणामप्रसिद्धाशक्तिरितिवदन्ति। नव्यास्तु—वृत्तिस्त्रिधा शक्तिर्लक्षणा व्यञ्जना चेति लघुमञ्जूषायाम् नागेशभट्टा उद्घोषयन्त्येव। ता. वृत्तीः पदाश्रिता इति. शाब्दबोधकारणीभूतज्ञाने वृत्तिवैशिष्ट्य प्रतिपादयन्त आहुः।[1]

आलङ्कारिकास्तु तत्र तत्र लक्षणा शब्दवृत्ति स्वीकुर्वन्त्येव, "**तिस्र शब्दस्य शक्तय.**" इत्यादिस्फुट प्रतिपादयन्तः। एव लक्षणाशब्दव्यापाररूपा सिद्धा।

लक्षणावृत्तेर्विरोधिनः—लक्षणावृत्तेर्द्विधा विरोधिन, केचनाभिधातिरिक्तवृत्यभाववादिनः, केचन अभिधान्तर्भाववादिनः। तत्र लक्षणावृत्यभाववादीमहिमभट्ट एव। तस्याऽयमभिप्राय —शब्दे एका एव शक्तिर्नान्या। शब्दस्यानेकशक्तिसमाश्रयत्व नोपपद्यते, यतो हि एकाश्रिता अनेकशक्तयः परस्परनिरपेक्षापौर्वापर्यनियमरहितायुगपदेवप्रवृत्ताश्च भवन्ति। यथा—अग्नौ दाहिका पाचिका प्रकाशिका शक्तयः परस्परनिरपेक्षा. क्रमरहिता युगपद्कार्यकारिण्यः सन्ति तथा शब्दस्य शक्तयो न दृश्यन्ते, अभिधाशक्तिपूर्वकत्वेनेतरशक्तिप्रवृत्तिदर्शनात्, तथाहि—अभिधया मुख्यार्थोपस्थित्यनन्तरतात्पर्यानुपपत्तौ सत्या मुख्यार्थसम्बन्धेन रूढि प्रयोजन वाऽभिसन्धाय लक्षणावृत्तिर्लक्ष्यार्थं बोधयति। व्यङ्ग्योऽर्थश्च वाच्यसामर्थ्याक्षिप्त एवेति लक्षणाव्यञ्जनयोरभिधापेक्षत्व क्रमिकत्व निष्पन्नमिति लक्षणाव्यञ्जनेन शब्दशक्ती, अपितु अर्थाश्रये इमे। अनयोश्चानुमानेऽन्तर्भाव। नह्यनियतसम्बन्धो लक्ष्यतेऽत. शक्यसम्बन्धो नियत एव, नियतसम्बन्धश्च व्याप्तिः व्याप्तेश्चानुमानोत्थापकत्वात् लक्ष्योऽर्थोऽनुमेय एव। न तु शब्दवृत्तिर्लक्षणेति।[2]

खण्डनम्—परञ्चैतत्सर्वं प्रौढिवादमात्रम्, अनुमानेन लक्षणा गतार्थयितु न शक्यते, "मञ्चाः क्रोशन्ति" इत्यादौ मञ्चानामचेतन-

---

१. स्वाश्रयपदविषयकत्वेनेत्यादिना।

२. व्यक्तिविवेके।

त्वेन क्रोशनस्यासम्भवरूपे बाधे सति तत्सिद्धयर्थ मञ्चपदस्य तात्स्थ्य-रूपात् सम्बन्धात् मञ्चस्थबालके लक्षणा इष्यते, अनुमितिश्चात्र व्याप्तेरभावाद् भवितुन्नार्हति, मञ्चस्य भूतलवृत्तितया मञ्चस्थस्य मञ्चवृत्तितया दैशिकव्याप्तेरभावात्, मञ्चस्थं विनाऽपि मञ्च-प्रतीतेः कालिकव्याप्तेरप्यसम्भवात्, व्याप्तेरभावान्मञ्चस्थप्रतीतौ नानुमितिः प्रत्यक्षोपमित्यादीनां प्रमाणाना कथैव नास्ति परिशेषादु-पस्थितत्वाच्छब्द एव कारणम्, मञ्चपदस्याभिधाशक्त्या मञ्चस्थ-प्रतीतिर्भवितु नार्हति, समयाभावात्। तस्माल्लक्षणयैवप्रतीति. लक्ष्यश्च सोऽर्थ, इति। यदप्युक्तम्—एकाश्रितानेकशक्तय: परस्परनिर-पेक्षा: पौर्वापर्यनियमरहितायुगपदेवप्रवृत्ताभवन्तीति तदपि नैका-न्तिकम्, तथाहि चन्दने शैत्यप्रदत्व, तापशामकत्वञ्चेति द्वे शक्ती, तयो: परस्परापेक्षत्व क्रमिकत्वञ्च दृश्यते, पुरा शैत्योपलब्धि:, ततस्ताप-शान्तिरिति, एव मनुष्ये ज्ञानेच्छाक्रियाशक्तय: परस्परापेक्षा: क्रम-प्रवृत्ताश्च भवन्ति, जानाति, इच्छति, ततो यतते, इति। तथैव पुराऽभिधयाऽर्थबोध: ततो निमित्तबलाल्लक्षणयेति सिद्धा, अभि-धातिरिक्ता लक्षणाशक्ति:।

यत्तु सङ्केतसहकारेण शब्दोऽर्थप्रतिपादक., अत. शब्दस्य सङ्केति-तार्थबोधकत्वाद्वाच्य एवार्थस्तद्व्यतिरिक्तोऽर्थो नास्ति[1] इति। तदवि चारिताभिधानम्, लक्षणापि सङ्केतसहकारेणैवार्थ बोधयति, तथाहि— यथासङ्केतग्रहसापेक्षा अभिधा, मुख्यार्थबाधादित्रयस्य सङ्केतग्रहस्य च सापेक्षा लक्षणा अतएवाभिधापुच्छभूतेतिप्रतिपादनात्। अभिधा-न्तर्भाववादिन:—

भट्टलोल्लट., भट्टनायक:, मुकुलभट्ट:, कुन्तक., वैयाकरणाश्चेति। भट्टलोल्लटो लक्षणा न स्वीकरोति। इत्यभिधाने हेतुद्वयम्–भट्टलो-ल्लटस्य रसविषयकमत मीमासकमतमुच्यते, तत्र मीमाकत्वं किमिति बहुश आलोडनेनापि "मुख्ययावृत्त्या"[2] इतिप्रतिपादन विहाय नान्यद् दृष्टिपथमधिरोहति, इतिकृत्वा मन्ये अन्ये विद्वास इमं अभिधावादी-

१. लोचने—ध्वनौ सम्भाव्यदूषणप्रकटनाऽवसरे प्रथमसम्भव्यमतम्—समया-पेक्षणेन शब्दोऽर्थप्रतिपादिक इतिकृत्वा वाच्यव्यतिरिक्त नेत्यादि।

२. काव्य प्रकाशे चतुर्थोल्लासे।

मीमासक इति मन्यन्ते, व्यञ्जनामपि अय न स्वीकरोति, शरवद् दीर्घ-दीर्घतराऽभिधाव्यापारेणैव रसादिव्यग्यप्रतीतिमापादयति। परञ्चायं लक्षणा न स्वीकरोति चेन्मम्मटस्यशरवद्दीर्घदीर्घतराऽभिधाव्यापारखण्डनावसरे "कस्माच्चलक्षणा"[1] इति प्रश्नो नोपपद्यते, अतो-लक्षणामय स्वीकरोत्येव, मीमासका लक्षणा स्वीकुर्वन्त्येवेतिनाभि-योक्तव्य। भट्टनायकश्च रसविषयकभरतसूत्रव्याख्यानावसरे—काव्ये अभिधाभावना, भोजकत्वेत्याख्य व्यापारत्रय प्रतिपादयति[2]। तत्र शङ्कोदेति यदय लक्षणा न स्वीकरोति नामग्रहणात्, परञ्च तद् व्याख्यातार. अभिधा निरन्तरार्थसान्तरार्थनिष्ठामुभयविधा गृह्णन्ति, अतोऽस्य मत वैयाकरणवत्। एवम् मुकुलभट्ट, कुन्तकोऽपि लक्षणा-मभिधाभेदमेव स्वीकुरुतः। मन्ये, वैयाकरणमतप्रभाविता इमेऽतो वैयाकरणमतसमीक्षया सर्वे समीक्षिता भवन्ति इतिकृत्वा वैयाकरण-मतसमीक्षण क्रियते। तत्र लक्षणा अपि अभिधैवेति स्वीकुर्वाणास्ते एवं प्रष्टव्या यद् विषय, स्वरूप, निमित्त, प्रतीतिभेद स्वीकुर्व-न्तोऽपि भवन्तो यदि लक्षणामभिधातो भिन्ना नाङ्गीकुर्वन्ति, तर्हि भवतां मते नील-पीतादौ क्वचिदपि भेदो न स्यात्। अयमेव हि भेदा-भेदहेतुर्वा यद् विरुद्धधर्माध्यासः कारणभेदश्चेति। न च सर्वे सर्वा-र्थवाचका इति सिद्धान्तात् सर्व पद वाचकमेवेति क्व लक्षणेतिवाच्यम्, योगिना कृते तदुपयोगेऽपि आधुनिकाना कृते तदुपयोगाभावात्। न चाभिधा सङ्केतग्रहसापेक्षा, सङ्केतग्राहकशिरोमाणर्व्यवहारः, व्यव-हारेण च गङ्गापदस्य क्वचित्प्रवाहरूपोऽर्थ क्वचित्तररूपोऽर्थोऽव-गम्यते, उभयथा शब्दा. प्रयुक्ता. गङ्गा हरति वै पाप, दृष्टा पीताऽव-गाहिता। गङ्गाया घोष इति च। तत्र तात्पर्यवशात्क्वचित्प्रवाह-रूपोऽर्थः क्वचित्तटरूपोऽर्थश्चेतिवाच्यम्, भिन्नभिन्नस्थले विभि-न्नार्थकरणात् शब्दार्थसम्बन्धस्यानित्यत्वापत्तेः, न च तात्पर्यवशा न्निमित्तवशाच्च गङ्गात्वारोपादेव तटरूपमर्थंगङ्गाशब्दः प्रतिपादय-तीतिशब्दः स्वार्थे व्यवस्थित इतिवाच्यम्, गौणमुख्यभेदानुपपत्तेः। न च प्रसिद्धशक्त्या बोध्योऽर्थो बोधकश्च शब्दो मुख्योऽप्रसिद्धशक्त्याबो-ध्योऽर्थो बोधकः शब्दश्च गौण इति शब्देऽनेकधा शक्तिरस्माभिरपि

१. तत्रैव पञ्चमोल्लासे।

२. रसगंगाधरेरसनिरूपणे—अभिधाभावनाचैव तद्भोगीकृतिरेव चेति।

स्वीक्रियते, शब्दस्यानेकधर्मिण इति कोऽभियोगावसर इति, एवञ्चेन्न-कोऽप्यभियोगोनाममात्रेविवादो यदन्यैर्लक्षणेत्युच्यते तदेवभवद्भिर-प्रसिद्धेति, जघन्येति वोच्यते, युक्त वा जघन्येतिकथनम्, मुखमिव प्रधानत्वान्मुख्या अभिधा। जघनमिव पश्चाद्भाविताज्जघन्या लक्षणेति। **पुंयोगादाख्यायामि**तिसूत्रयन् सूत्रकारः, चतुर्भिश्च प्रकारैरतस्मिन् स इत्येतद्भवति इति भाषमाणो भाष्यकारः, प्रसिद्धत्यागाद् गौणत्व मुख्यात्वञ्चोपचर्यते इति व्याहरन् भर्तृहरिः प्रसिद्धाप्रसिद्धेति शक्ति-भेदकवमानः कौण्डभट्टः, लक्षणा नाम्ना निर्दिशन्नागेशोऽपि, लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्, प्रत्याहारग्रहणे तद्वाच्यवाच्ये निरूढा लक्षणा गौणमुख्ययोर्मुख्येकार्यसम्प्रत्यय इति व्याहरन्तोऽन्ये वैयाकरणा अपि लक्षणां स्वीकुर्वन्त्येव, केचिन्नाम्ना निर्दिशन्ति केचित्त्वन्यथा, आलङ्कारिका अभिनवगुप्तमम्मटप्रभृतयोऽपि अभि-पुच्छभूता सा इति निगदन्त्येवेतिदिक्।

अस्ति लक्षणाशक्तिस्तत्स्वरूप प्रयोजनमिदानी वक्तव्यम्—तत्र मीमासकरीत्या लक्षणास्वरूपम्—मीमासकेषु भाट्टा. प्राभाकराश्च सन्ति। तत्र भाट्टमते—मानान्तरविरोधनिमित्तकमुख्यार्थस्य परित्यागे सति गत्यार्थसम्बद्धार्थप्रतीतिर्लक्षणेति[1]। तद्यथा गङ्गाया घोष इति वाक्यश्रवणानन्तरं प्रवाहनिष्ठाधारतानिरूपिताधेयतावान् घोष इति जायमानो बोध, प्रवाहस्य घोषाधिकरणत्वासम्भवात्प्रत्यक्षादि-प्रमाणविरुद्धः, एवञ्चप्रवाहरूपमुख्यार्थस्वीकारे प्रत्यक्षादिना विरोधे सति प्रवाहरूपाभिधेयेन सम्बद्ध यत्तटादितस्यप्रतीतिर्लक्षणेति प्रति-पादनान्मुख्यार्थबाधोमुख्यार्थसम्बन्धश्चनिमित्तम्, प्रतीतिरूपालक्षणा-निष्पन्ना, क्रियन्ते साम्प्रतकश्चिदित्यादिनारूढिप्रयोजनयोरन्यतरच्च-निमित्तम्।

श्रीनागेशभट्टोपि मीमासकमतं प्रतिपादयन्—अन्वयाद्यनुपपत्ति-ज्ञानपूर्वक शक्यत्वेन गृहीतप्रसिद्धार्थसम्बन्धज्ञानजन्याऽशक्योपस्थितिरेव लक्षणेत्याह।[2] श्रीमद्दुर्बलाचार्योऽपि मीमांसकमते शक्यादशक्योपस्थि-तिर्लक्षणेत्युक्तवान्।[3] इत्थं मतेऽस्मिन् गङ्गापदेन प्रवाहस्मरणम्

१. तन्त्रवार्तिके—मानान्तरविरोधेत्यादि।

२. लघुमञ्जूषायाम्—तादृशसम्बन्धज्ञानजन्या तदुपस्थितिरेव लक्षणा।

३. तादृशेति प्रतीकमुपादाय कुञ्जिकायाम्।

प्रवाहेण च तीरस्मरणम् तदेव च बोधहेतु । अर्थात् य एवं जानाति गङ्गापदाभिधेय प्रवाह, प्रवाहसम्बन्धश्च तट इति स एव गङ्गाया घोष इति वाक्यात् गङ्गापदलक्ष्यार्थमवगन्तुं क्षमः इति लक्षणवत्तिर्ज्ञाता सती उपयुज्यते। परञ्च गभीरायां नद्यां घोष इति वाक्यात् गभीरनदीतीरे घोष इति अभिमतलक्ष्यार्थस्य कथ बोधः? गभीरपदलक्षणया, उत नदीपदलक्षणया कि वा उभयपदलक्षणया, अथवा पदद्वयात्मकवाक्यलक्षणयेति चत्वार पक्षा. सन्ति। तत्र न प्रथमः, गभीरपदस्य तीरलक्षकत्वे, नद्यामित्यनन्वयापत्तेः नहि तीरं नदी। अतएव न द्वितीयोऽपि, गभीरायामित्यनन्वयापत्ते., नहि तीरं गभीरम्। एवं तृतीयोऽपि पक्षो नोचितः विशिष्टनदीसम्बन्धीतीररूपस्यार्थस्याप्राप्तिप्रसङ्गात्।

न च नदीपदस्यैव तीरे लक्षणा गभीरपदं तात्पर्यग्राहकमिति वाच्यम्, विनिगमनाविरहात् गभीरपदस्यैव तीरे लक्षणापत्तेः। न च नदीपदस्य द्रव्यवाचकतया साक्षात्सन्बन्धानुरोधेन च नदीपदे एव लक्षणेति वाच्यम्, गभीरपदस्यापि नित्यगुणिवाचकतया तेनाऽपि साक्षात्सम्बन्धस्यैव सत्वात्, अतः पदद्वयात्मकवाक्ये एव लक्षणाऽङ्गीकार्या। भाट्टमते वाक्यार्थश्च न शक्याः, अतः शक्यसम्बद्धार्थप्रतीतिः कथ लक्षणा? अतः "पदवाक्योभयानुसारिलक्षणम्"—स्वज्ञाप्यसम्बन्धो लक्षणेति। ज्ञाप्यत्वस्य पदार्थवाक्यार्थयोरुभयत्र सत्वाद् उभयत्र लक्षणा। वाक्ये लक्षणास्वीकारादेव वायुर्वैक्षेपिष्ठा देवतेतिवाक्यस्य वायुदेवताककर्म प्रशस्तम् इति लक्ष्योऽर्थः यत्तु—सर्वत्र विशेष्यपदे एव लक्षणा इतरपदानि तात्पर्यग्राहकाणीति सिद्धान्तात् वाक्ये न लक्षणेत्याहुर्नैयायिकास्तत्र विश्वरूपो वै त्वाष्ट्र इत्यादौ विशेष्यपदानामप्यनेकत्वेन कस्य लक्षणेत्यत्र विनिगमकाभावात् वाक्ये लक्षणाऽङ्गीकार्यैव। न च स्वज्ञाप्यसम्बन्धो लक्षणेत्याङ्गीकारे अपभ्रंशेऽपि स्वज्ञाप्यसत्वात् लक्षणापत्तिः, इष्टापत्तेः। अतएव 'साहेन्ति सखि सुहअ खणे खणे' इत्यादेः लक्ष्यस्य व्यञ्जकत्वोदाहरणं काव्यप्रकाशकारैर्दत्त सङ्गच्छते।

विवेचनम् :—भाट्टाः प्रतीतिरूपामुपस्थितिरूपा वा लक्षणां मन्वते तत्तु न युक्तम् प्रतीतिहेतुर्हि वृत्तिर्नतु प्रतीतिरेव। शब्दज्ञानाय च वृत्तेरुपयोगः। अतः प्रतीतिरूपलक्षणायां तेषामभिप्रायो नास्ति प्रत्युत

प्रतीतिपदे उपस्थितिपदे वा करणे क्तिन् बाहुलकात्, प्रतीयतेऽनयेति प्रतीति:, दृश्यते चान्यत्रापि करणे क्तिन्, यथा शब्दव्यापारवाचक-वृत्तिपदे लक्षणावाचकभक्तिपदे व्यञ्जनाबोधकव्यक्तिपदे अभिधा-बोधकशक्तिपदे एवञ्च प्रतीतिकरणभूता शब्दवृत्तिर्लक्षणेति सिद्धम् ।

प्रभाकराभिमतलक्षणास्वरूपम्—तत्र शालिकनाथप्रकरणपञ्चिका-याम् यदा वाच्यस्य अर्थस्य वाक्यार्थसम्बन्धो नोपद्यते तदावाच्यार्थ-सम्बन्धवशप्राप्तस्य अन्वयो भवति तत्र वाच्यार्थसम्बन्धवशप्राप्तोऽर्थो लाक्षणिक:। इत्थ प्रभाकरमते–मुख्यार्थसम्बन्धानुपपत्तिः मुख्यार्थ-सम्बन्धश्च हेतु:, शब्दव्यापाररूपा लक्षणेति निष्पन्नम् ।[1]

अथ न्यायशास्त्राभिमतलक्षणास्वरूपम् हेतुश्च—नैयायिकेषु प्राचीना: नवीनाश्च सन्ति तत्र प्राचीनन्यायप्रवर्तक श्रीसूत्रकारो महर्षिगौतम:, प्राचीनन्यायप्रणालीपदार्थमीमासात्मिका। तत्रापवर्गो-पयोगिषोडशपदार्थाना याथातथ्येन निरूपण वर्तते। नव्यन्यायप्रवर्त-कस्तत्त्वचिन्तामणिकार. श्रीगङ्गेशोपाध्याय । नव्यन्यायप्रणाली च प्रमाणमीमासात्मिका। लक्षणाविषयेसूत्रकार. श्रीगौतम: पदार्थनिरू-पणप्रसङ्गेव्यक्तौशक्तिस्वीकारे अनवस्था दोष., अर्थक्रियाकारिता च व्यक्तौ एव तर्हि व्यक्तिबोध कथमिति शङ्काया लक्षणया व्यक्तिबोध साधयन् सूत्रयाञ्चक्रे—सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्य-योगसाधनाधिपत्येभ्यो ब्राह्मणबालकटराजसक्तुचन्दनगङ्गाशकटान्न-पुरुषेष्वतद्भावेऽपि तदुपचार इति। अत्र साधनाधिपत्येभ्यो इति हेतौ पञ्चमी। अत: सहचरणादीनि निमित्तानि, तात्पर्यानुपपत्तिश्च निमित्त-मित्यवतरणिकातोऽवसीयते, तदुपचार इति लक्षणस्वरूपम्। अर्थात् तद्धर्माभावेऽपि तच्छब्दव्यवहार:। सच तद्धर्मारोपेण। आरोप-निमित्तानि च सहचरणादीनि। इत्थ सर्वत्र प्राचीनन्याये आरोपरूपा-लक्षणासिद्धा। नागेशभट्टेनापि लघुमञ्जुषाया शक्यताऽवच्छेदकारोप-रूपा लक्षणा प्रतिपादयन् सहचरणेत्यादिसूत्रमुदाजहारेति ।

नव्यन्यायप्रवर्तक: श्रीगङ्गेशोपाध्यायस्तत्त्वचिन्तामणौ,—शक्य-सदृशभिन्नान्वयोपयोगिपदार्थोपस्थितिहेतुर्लक्षणेत्याह। तेषा मते

१. प्रकरणपञ्चिकायाम्—वाच्यस्यार्थस्यवाक्यार्थसम्बन्धानुपपत्तित.। तत्स-म्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते। इति ॥

लक्षणाशक्यसम्बन्धरूपा नोपस्थितिरूपा। यत उपस्थितिर्हेतुर्हिवृत्तिः, नोपस्थितिरेव वृत्तिः इति प्रतिपादयन् प्रतीतिमुपस्थितिं वा लक्षणां दूषयित्वा सम्बन्धरूपां स्वीचकार[1]। इत्थमयं सहचरणेत्यादिसूत्रे अभेदार्थिकां पञ्चमी मनुते। अतः साहचर्येत्यादिसम्बन्धविशेष एव लक्षणा, मुख्यार्थबाधादिनिमित्तम्। अन्ये सर्वे नव्यनैयायिकास्तद-नुयायिन एव[2]।

केचन तात्पर्यरूपांलक्षणां स्वीकुर्वते[3]। सम्बन्धं प्रयोजनञ्च निमित्ते। परञ्च तात्पर्यरूपालक्षणेति न युक्तम्, यतोहि लक्षणाशब्दव्यापारः। सचान्वयोपयोग्यर्थोपस्थितिहेतुः, लक्ष्यार्थश्च शक्यसम्बद्धः। एवं शक्य-सम्बन्धज्ञानमेव लक्ष्यार्थोपस्थितौ पर्याप्तं कृतं तात्पर्यपर्यन्ताबुधावनेन। किञ्च तात्पर्यरूपाया लक्षणाया स्वीकृतौ यत्र मुख्यार्थे एव तात्पर्यं तत्रापि लक्षणापत्तेरिति नेदं मतं युक्तम्।

अथ व्याकरणानुसारिलक्षणास्वरूपम्—यद्यपि अष्टौ व्याकरणानि तथाऽपि पाणिनीयव्याकरणस्यैव महत्त्वम्, पाणिनीयव्याकरणमपि नव्यप्राचीनभेदेन द्विविधम्, नव्यव्याकरणेऽपि प्राचीना नवीनाश्च सन्ति, तत्र प्राचीनेषु महाभाष्कारः भर्तृहरि कैयट भट्टोजीदिक्षितः कौण्डभट्टप्रभृतयः। नव्येषु हरिदीक्षितनागेशप्रभृतयः। तत्र प्राचीनाना मते लक्षणाख्या काचन नान्यावृत्तिः प्रत्युत अप्रसिद्धाशक्तिरेव। न च मनोरमाया भट्टोजीदीक्षितेन शब्दरत्ने च हरिदीक्षितेन अर्थवत्सूत्रेऽर्थ-वत्वप्रतिपादनावसरे लक्षणावृत्तिः प्रतिपादनेति भ्रान्तिः कार्या, यतो हि मनोरमाया नैयायिकाना मते प्रतिपादनं शब्दरत्ने च नागेशमतमेव, वस्तुतो नागेश एव शब्दरत्नस्य कर्ता, स्वगुरोर्हरिदीक्षितस्य नाम्ना प्रकाशितवान्। अतो दीक्षिताभ्या लक्षणेति नाम्नेयं वृत्तिर्नप्रतिपादिता तथापि लक्षणास्वरूपनिमित्तादीना प्रतिपादनं तत्र तत्र ग्रन्थेषु स्फुट-मुपलभ्यते। तद्यथा—महाभाष्ये शेषावतारः श्रीपतञ्जलिः—**पुंयोगा-**

---

१. अशक्यासदृशान्वयप्रतियोग्युपस्थितिहेतुः। स्वशक्यसम्बन्धोलक्षणेति-परमार्थः।

२. लक्षणाशक्यसम्बन्धस्तात्पर्यानुपपत्तितः।

३. स्वार्थसम्बन्धिनितात्पर्यमेव लक्षणा, तत्तात्पर्यञ्चतत्प्रतीतिमुद्दिश्योच्चरि-तत्वम्। तात्पर्याद्धिवृत्तिर्नतुवृत्तेस्तात्पर्यम्।

दाख्यायामिति सूत्रस्योदाहरणं निरूपयन् 'प्रष्ठी, प्रचरी' इत्युक्त्वा प्रष्ठशब्दोऽकारान्तः स्त्रिया कथं वर्तते इत्याशङ्क्य समादधे "तस्येदमित्यनेनाभिसम्बन्धेन" तर्हि तस्येदमिति प्राप्तस्याणो लोपोवक्तव्योऽन्यथा प्राष्ठीति स्यात् इति प्रश्ने "विभाषातद्धितोत्पत्तिरित्याह" तदापि वैकल्पिकतद्धितस्य लोपो वक्तव्यः इत्याद्याशङ्क्य सिद्धान्तपक्षमाह "सिद्धं तु स्त्रिया. पुंशब्देनाभिधानात् इति" तथापि प्रष्ठस्येयमिति सम्बन्धे प्राप्तस्याणो लोपो लोपो वक्तव्य इत्याशङ्क्य, नैषदोष· नावश्यमेवाभिसम्बन्धो भवति तस्येदमिति, अयमपि सम्बन्धो भवति सोऽयमिति, कथ पुनरतस्मिन् स इत्येद्भवति इत्याशङ्क्य समादधौ चतुर्भिः प्रकारैः स इत्येद्भवति, तात्स्थात्, ताद्धर्म्यात्, तत्सामीप्यात् तत्साहचर्यादिति । तात्स्थ्यात्—मञ्चा हसन्ति । ताद्धर्म्यात्– जटिनं यान्तं ब्रह्मदत्त इत्याह । ब्रह्मदत्ते यानि कार्याणि तानि जटिन्यपि क्रियन्ते इत्यतो जटी ब्रह्मदत्त इत्युच्यते । तत्सामीप्यात्—गङ्गायां घोष·, कूपे गर्गकूलम्, तत्साहचर्यात्—कुन्तान् प्रवेशय, यष्टीः प्रवेशय इति यत्प्रतिपादितं भाष्ये तदेवान्यैर्लक्षणया व्यवह्रियते, तत्र तत्सामीप्यादित्यादौ हेतौ पञ्चमी अतः सामीप्यादिसम्बन्धो हेतुः, कथं पुनरतस्मिन् स इति शङ्कया मुख्यार्थबाधो निमित्तम्, अतस्मिन् स इत्येद्भवति इत्यनेन "शक्यतावच्छेदकारोपरूपा" लक्षणा सिद्धा, कैयटोऽपि तत्रैव एवमेवाह इति तत्रत्य प्रदीपदर्शनेनाऽवसीयते ।

श्रीभर्तृहरिः वाक्यपदीये—यथा गोशब्दस्य सास्नादिमान् पिण्डोऽर्थस्तथा वाहीकोऽपि । निमित्तमभिसन्धाय गोत्वस्य वाहीके आरोपः क्रियते, अर्थप्रकरणशब्दान्तरयोगादयो निमित्तानि, गौणो मुख्यश्च शब्दो द्विविधः प्रसिद्धिभेदादित्यादिप्रतिपादयन् "शक्यतावच्छेदकारोपरूपां लक्षणां स्वीकरोति महाभाष्यकारवन्निमित्तानि च[1] ।

---

१. वाक्यपदीये—यथा सास्नादिमान् पिण्डो गोशब्देनाभिधीयते, तथा स एव गोशब्दो वाहीकेऽपि व्यवस्थित । गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते । अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थित. । एकमाहुरनेकार्थशब्दमन्ये परीक्षकाः । निमित्तभेदात्सर्वत्र सामर्थ्यं तस्य भिद्यते । अर्थप्रकरणाभ्या योगाद्योगाच्छब्दान्तरेण वा । यौगिकार्थमतिक्रम्य पर्यायेष्ववतिष्ठते । सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मिण. । प्रसिद्धत्यागाद्गौणत्वं मुख्यत्वं चोपचर्यते ।

दीक्षितमतेऽपि एवमेव—द्रोणोव्रीहिरित्यत्र प्रतिपादितरीत्या शक्यतावच्छेदकारोपरूपालक्षणा। तत्रोक्तं उपचारात्—द्रोणत्वारोपादिति।

नव्येषु नागेशः—वैयाकरणशिरोमणिरयम् यथा महाभाष्ये कृतभूरिपरिश्रमस्तथैव साहित्याम्भोधिरत्नयुद्धृत्य काव्यप्रकाशप्रदीमुद्योतेन संयुयोज, रसगङ्गाधरस्य गुरुमर्मप्रकाशं च चकार। येनास्य साहित्यज्ञानगरिमा स्फुटी भवति। शास्त्राम्बुधिनिष्णातोऽयं स्वकृतलघुमञ्जूषायां लक्षणावृत्तेः सम्यग्विवेचनम् कृतवान्, परञ्च लक्षणाविवेचन कुर्वतोऽनेन स्वकीयवैयाकरणत्वमपि ख्यापितम् "लक्षणेति व्यवहार" इति कथयता। एतस्येदं हृदय यदेतादृशस्थले अन्ये मीमांसकनैयायिकाऽलङ्कारिकादयोलक्षणेति व्यवहरन्ति न तु वैयाकरणाः ते तु अप्रसिद्धशक्त्यैव व्यवहरन्ति इति। तन्मते "शक्यतावच्छेदकारोपरूपा" लक्षणा मुख्यार्थबाधः, शक्यसम्बन्ध प्रयोजनादिति निमित्तानि, इति तद्ग्रन्थावलोकनेन स्फुटी भवति[1]। अयमन्वयानुपपत्ति लक्षणावीजं न स्वीकरोति, यतो हि गङ्गाया घोष इत्यादावन्वयानुपपत्तिपरिहारस्तु घोषपदस्य मकरादौ लक्षणायामपि भविष्यति, न च "नविधौ परः शब्दार्थ" इति नियमात् घोषपदे लक्षणाकर्तुं न शक्यत इति वाच्यम्, गङ्गापदस्यैव नावि लक्षणायामदोषात् अतस्तात्पर्यानुपपत्तिर्लक्षणावीजम्।

साहित्यशास्त्रानुसारिलक्षणास्वरूपम्—आलङ्कारिकेषु आनन्दवर्धनात्प्राक्तना ये भामहदण्डिवामनोद्भटप्रभृतय आलङ्कारिकास्तेषां ग्रन्थे शब्दवृत्तिविवेचनप्रकरण नोपलभ्यते, तथापि तद्ग्रन्थेषु प्रकरणवशात् प्रतिपादितलक्षणाविषयपरिशीलनेन व्याकरणानुसारिलक्षणास्वरूपमवसीयते। आनन्दवधनश्च-लक्षणायां मुख्यार्थवाधशक्यसम्बन्धरूढिप्रयोजनान्यतरेतिहेतुत्रयमारोपरूपाञ्च लक्षणामङ्गीकरोतीति तद्ग्रन्थविमर्शाज्ज्ञायते[2]। लोचनकाराश्च—भाक्तमाहुस्तमन्ये इत्यंशं

---

१. लघुमञ्जूषायाम—परेत्वित्यादिना—आरोपितशक्यतावच्छेदकरूपेण शक्त्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः।

२. ध्वन्यालोके—रूढा ये विषयेऽन्यत्र, इत्यादिना मुख्यांवृत्तिपरित्यज्येत्यादिना

विवेचयन् भक्तिशब्दव्युत्पत्त्यैव मुख्यार्थबाधानिमित्तं प्रयोजनमिति त्रयसद्भाव उपचारबीजमाह । तत्र भञ्जो आमर्दने इत्यस्माद् धातोः क्तिनि कृते भङ्गोभक्तिरित्यनेन मुख्यार्थबाधेति, भज् सेवायाम् इत्यस्माद् करणे क्तिनि, भज्यते पदार्थेन प्रसिद्धतया उत्प्रेक्ष्यते इति भक्तिर्धर्मः, अभिधेयेन सामीप्यादिः तत आगतो भाक्त इत्यनेन सामीप्यादिसम्बन्धोनिमित्तम्. तथा भक्तिः प्रतिपाद्ये श्रद्धातिशयस्तां प्रयोजनत्वेनोद्दिश्य तत आगतो भाक्त इति प्रयोजनञ्चेति मुख्यार्थबाधादित्रयम् हेतुरित्याह । एवं तृतीयोद्योते गुणवृत्तिव्यञ्जनयोर्भेदमापादयन् प्रसङ्गत आरोपरूपां लक्षणामाह—"मुख्ये वस्तुनि •सम्भवति सति मुख्यस्यैव सम्भवतो वस्त्वन्तरस्य तत्रारोपः क्रियते, विषयान्तरमात्रत आरोपव्यवहारो भवति आरोपव्यवहार एव उपचारस्य जीवातुभूतम्" इति तत्रत्यायाः पङ्क्तेरभिप्रायः । मुकुलभट्टश्च—अर्थव्यापारं लक्षणां स्वीकरोति, स शब्दव्यापारतो यस्यार्थस्यप्रतीतिभर्वनिसमुख्योऽर्थः, अर्थसामर्थ्यात्प्रतीतोऽर्थोलक्ष्य[1] इत्याह । परञ्च तटस्थे लक्षणोत्यादिना शुद्धायां मुख्यार्थलक्ष्यार्थयोर्भेदं गौण्या चाभेद प्रतिपादयन् गौण्यामारोपंस्वीकुर्वन्निवाभाति ।

मम्मटभट्टाः—मुख्यार्थबाधेतद्योगे च सति अनादिप्रयोगप्रवाहात् प्रयोजनाभिसन्धेर्वाअन्योऽर्थो यल्लक्ष्यते सा लक्षणा इत्युक्तवन्तः । अत्र मुख्यार्थबाधादित्रयं हेतुः। अन्योऽर्थो यल्लक्ष्यते सा लक्षणेति स्वरूपम् । अत्र केचित्—यदिति क्रियाविशेषणम् तथा च यल्लक्ष्यते = यत्प्रतिपाद्यते सा प्रतिपत्तिरेव लक्षणेतिव्याख्यातवन्तस्तन्नयुक्तम्, अभिधाव्यञ्जनावल्लक्षणापि वृत्तिरूपा, वृत्तिजन्या च प्रतिपत्तिस्तस्याः लक्षणात्वासम्भवात् । नहि वृत्तेर्व्यापारत्वे कश्चिद् विवादः । तस्मात् केचन यदिति ययोत्यर्थकमव्यय स्वीकृत्य अन्योऽर्थो यया वृत्या प्रतिपाद्यते सा

---

च हेतुत्रयवचनम् । तृतीयोद्योते—नहिगुणवृत्तौ यदा निमित्तेन केनचिद्विषयान्तरे शब्द आरोप्यते अत्यन्ततिरस्कृतस्वार्थः यथा अग्निर्माणवक इत्यादौ यथा वा स्वार्थमशेनापरित्यजन् तत्सम्बन्धद्वारेण विषयान्तरमाक्रामति यथा गङ्गाया घोष इत्यादिपङ्क्तिरारोपरूपा लक्षणाप्रमाणयति ।

१. अभिधावृत्तिमातृका—शब्दव्यापारतोयस्यप्रतीतिस्तस्यमुख्यता । अर्थावसेयपुनर्लक्ष्यमाणत्वमुच्यते ।

वृत्तिर्लक्षणेति प्रतिपादयन्ति[1] (साहित्यदर्पणे विश्वनाथोऽप्येवमेव प्रतिपादयति[2] ) अन्ये च लक्ष्यते इति णिजन्तादाख्यातम्, णिजर्थो हेतुः, हेतुश्च शब्दः, इति अन्यार्थप्रतिपत्तिहेतुशब्दव्यापारो लक्षणेति निगदन्ति। कश्चन यदित्यस्य यतःसम्बन्धात् इत्यर्थं विधाय सम्बन्धमेव लक्षणामाह। तन्न, सम्बन्धस्तु हेतुः। नहि सम्बन्धरूपत्वे लक्षणायाः, सम्बन्धो हेतुर्घटते। नागेशश्चोद्योते परिष्कृत लक्षणमाह—'शक्तित्वेन शक्तिज्ञानशक्यस्मृतिविषयशक्यसम्बन्धज्ञानजन्या तात्पर्यविषयेतरपदार्थतावच्छेदकावच्छिन्ने मुख्यार्थतावच्छेदकरूपेण तदवच्छिन्नान्वयबाधज्ञानकालीना रूढिप्रयोजनाऽन्यतरहेतुकाऽशक्यार्थप्रतिपत्तिस्तज्जनकज्ञानविषयशक्यसम्बन्धरूपव्यापारो वा लक्षणे'–ति।

भोजराजमतेन—शब्दवृत्तिरूपैव लक्षणा। अयं मीमांसाप्रभावित इति गौणी लक्षणातो पृथक् निगदन् प्रतिभाति। तद्यथा—'शब्दो हि मुख्यगौणीलक्षणाभिरर्थप्रकरणादिसम्पादितसाचिव्यादिभिस्तिसृभिरेव वृत्तिभिरर्थविशेषप्रतिपत्तिनिमित्त भवती'–ति।

चन्द्रालोके जयदेवश्च–'मुख्यार्थाविवक्षायां तात्पर्यानुपपत्तौ सत्यामिति यावत् रूढेः प्रयोजनाद्वा हेतोः मुख्यार्थसम्बद्धम् अर्थान्तरं वदन्ती लक्षणावृत्तिरिति[3] प्रतिपादयन् मुख्यार्थबाधादित्रय हेतु शब्दवृत्तिश्च लक्षणे'–त्याह।

अप्पयदीक्षितस्तु वृत्तिवार्तिके—'वाच्यार्थसम्बन्धसापेक्षार्थप्रतिपादिका शब्दशक्तिर्लक्षणे'–त्युक्तवान्।

पण्डितराजस्तु–'शक्यसम्बन्धो लक्षणे'–ति व्याजहार।

आशाधरभट्टस्तु त्रिवेणिकायाम्–'शक्यसम्बन्धसहकारिणीवृत्तिर्लक्षणा। सा च शब्दव्यापारत्वाच्छब्दनिष्ठा मुख्यार्थबाधे सति

---

१. मुख्यार्थबाधे तद्योगे, रूढितोऽथप्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया (काव्यप्रकाशे)॥

२. साहित्यदर्पणे—मुख्यार्थबाधे तद्युक्तो ययाऽन्योर्थः प्रतीयते।
रूढे प्रयोजनाद्वाऽसौ, लक्षणाशक्तिरर्पिता। इति।

३ चन्द्रालोके—मुख्यार्थस्याविवक्षाया पूर्वावाची च रूढित.।
प्रयोजनाच्च सम्बद्ध वदन्ती लक्षणा मता॥

तत्सम्बन्धिनं अर्थं विषयीकरोति, सम्बन्धो मुख्यार्थे प्राधान्येन वर्तमानोऽपि लक्ष्यार्थमाश्रयति'–इति जगाद ।

अच्युतरायस्तु–आरोपरूपां लक्षणां स्वीकरोति[1] । अन्ये च ये आलङ्कारिकाः सन्ति तेषु केचन शब्दव्यापाररूपां, केचन आरोपरूपां जगदुः इति साहित्यिकमतविवेचनम् ।

इत्थं मीमासक-नैयायिक-वैयाकरणालङ्कारिकमतमुपस्थाप्य विचार्यते यद्वस्तुतो लक्षणा–'शक्यतावच्छेदकारोपरूपा, शक्यसम्बन्धरूपा, वक्तृतात्पर्यरूपा वा, लक्षणायां बीजं च किमि'–त्यादि ।

तत्र नागेशमतप्रतिपादनावसरे प्रतिपादितरीत्या तात्पर्यानुपपत्तिरेव लक्षणायां बीजम्, अन्वयानुपपत्तिस्वीकारे "काकेभ्यो दधि रक्ष्यताम्," "नक्षत्रं दृष्ट्वा वाचं विसृजेदि"–त्यादौ लक्षणा न स्यात् । काकजन्यनाशोत्पत्तिप्रतियोगिकत्वत्कर्तृकव्यापारप्रयोज्याभाववद्दधि । एवं नक्षत्रदर्शनोत्तरकालिकवाग्विसर्जनमिति रीत्या अन्वयस्योपपत्तेः । न च तात्पर्यानुपपत्तेर्लक्षणा बीजत्वे स्वीकृते वैदिकवाक्ये लक्षणा न स्यात् वेदस्यापौरुषेयत्वेन वक्तुरभावात् वक्तारमन्तरा च वक्तृतात्पर्यानवगतेरिति वाच्यम् । वेदवाक्यस्य "उपक्रमोपसहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इत्यादिना तात्पर्यावगतेरिति दिक् । एवं मुख्यार्थबाधमुख्यार्थयोगयो रूढिप्रयोजनान्यतरस्य च हेतुत्वे न केषाञ्चिदपि विमतिः ( निमित्तादतद्भावेऽपि तदुपचार इति निगदन् न्यायवार्तिककारोऽपि निमित्तं मनुते ) । अतो

**लक्षणास्वरूपं** विवेचनीयम्—तत्र वक्तृतात्पर्यरूपा लक्षणा तु प्रागेव निराकृता । इदानी शक्यसम्बन्धरूपा, शक्यतावच्छेदकारोपरूपा वेति मुख्यतो विवेचनीयं वर्तते । तत्र लक्ष्यार्थप्रतिपादने शब्दस्य कीदृशो व्यापारः, शक्यसम्बन्धरूपः शक्यतावच्छेदकारोपरूपो वा । तत्र प्राचीननैयायिकाः, वैयाकरणाः, केचनालङ्कारिकाश्च शक्यतावच्छेदकारोपरूपा लक्षणां स्वीकुर्वन्त्येव । ये शक्यसम्बन्धरूपां लक्षणां निगदन्ति नव्यनैयायिकाः कश्चनालङ्कारिकश्च, त एवं प्रष्टव्याः—यत् "अन्यत्रान्यशब्द-

---

१. साहित्यसारे—अर्थारोपेण या शाब्दी शक्यसम्बन्धबोधिका ।
तात्पर्यानुपपत्त्यैव वृत्तिः सा लक्षणोच्यते ॥

प्रयोगस्तद्धर्मप्रतिपत्त्यर्थः" इति न्यायो भवतां मते कथं सङ्गच्छते। अन्यधर्मस्यान्यत्र प्रतिपत्तिः कथं स्यादारोपमन्तरा। न च शक्यार्थसम्बन्धमात्रेणेति वाच्यम्, सम्बन्धमात्रेण तटे गङ्गात्वप्रतिपत्तौ गङ्गायास्तटे घोष इति मुख्यशब्दाभिधानेऽप्यापत्तेः, वाचकशब्दादलभ्यस्यार्थस्य प्रतिपादनायैव लाक्षणिकशब्दस्य प्रयोगः, अतएव लक्षणाया महत्त्वम्, 'लक्षणां चतुरा नरा' इति निगदन्तोऽभियुक्ताश्च सङ्गच्छन्ते। अतएव मम्मटः—'तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः। गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेद' इति। पण्डितराजजगन्नाथस्यापि—'शक्यतावच्छेदकरूपेण लक्ष्यमाणस्य स्वीकारादि'-त्युक्तिरप्यत एव सङ्गता भवति। अपि च रूपकस्योपमातो भेदनिरूपणावसरे प्राचा द्वितीयसमाधानावसरे। अतएव गङ्गायां घोष इत्यत्र तटत्वेनाऽप्युपस्थितस्य तटस्य गङ्गात्वेनान्वयबोध. तत्प्रयोज्यः शैत्यपावनत्वादिप्रत्ययश्च सङ्गच्छते। मुखं चन्द्र इत्यत्रोपमानचन्द्रनिष्ठासाधारणगुणवत्त्वप्रत्ययः फलम्। नहि चन्द्रत्वप्रतीतिमन्तरा मुखे चन्द्रत्वनियतगुणवत्त्वधीरुपपादयितुं शक्येति च। सारोपसाध्यवसानलक्षणयोर्भेदं प्रतिपादयन् एकस्मिन् धर्मिणि चन्द्रत्वादीनां मुखत्वादीनां च साक्षाद्भानमेव सारोपातोऽस्याविच्छेदकमित्युक्तिरपि सङ्गता भवति।

न च शक्यतावच्छेदकरूपेण लक्ष्यार्थप्रतिपत्तौ 'कचतस्त्रस्यति वदन, वदनात् कुचमण्डलं बिभेति। मध्याद्बिभेति नयन, नयनादधरः समुद्विजति'—इत्यत्र क्रमशः कचवदनकुचमध्यनयनाधरपदानां, राहुचन्द्रकमलसिंहमृगपल्लवरूपार्थेषु लक्षणया कचत्वादिरूपशक्यतावच्छेदकरूपेण राह्वादिलक्ष्यस्य भानस्वीकारे भासादेरनुपपत्तिरिति वाच्यम्, सर्वत्र लक्ष्ये तत्तद्धर्मविशिष्टे शक्यतावच्छेदकधर्मारोप इति कचत्वादिना राहुत्वविशिष्टस्य बोधात् अनुपत्तिपरिहारात्। सर्वत्र लक्षकधर्मप्रतीत्यैव न प्रयोजनसम्प्रत्ययः, 'साहेन्ति सहि सुहअं,' 'उपकृतं बहु तत्रे'—त्यादौ लक्ष्यधर्मप्रतीत्यैव प्रयोजनसम्प्रत्ययः, इति।

न च गङ्गायां घोष इत्यादौ आरोपितगङ्गात्वेन बोधेऽपि तस्य ज्ञानस्य भ्रमत्वाच्छास्त्रज्ञानवतां सर्वथा भ्रमत्वेन ग्रहाच्च तदुत्तर गङ्गागतशैत्यपावनत्वादिप्रतीतिरूप फलं न सिद्धय`त्, अतएव शुक्तिरजत-

ज्ञाने भ्रमत्वज्ञानवतो न प्रवृत्तिरिति वाच्यम्, मध्ये व्यञ्जनया मुख्य-गङ्गापदार्थाभेदस्यापि प्रतीते· व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रह इत्यदोषात् ।

न च ये व्यञ्जना न स्वीकुर्वन्ति तेषां मते बाधज्ञानेन प्रतिबन्धाद् गङ्गात्वप्रकारकतटविशेष्यकबोधो नोदेतीति वाच्यम्, आहार्य-ज्ञाने शाब्दज्ञाने च बाधज्ञानस्याप्रतिबन्धकत्वात् । 'अन्नं प्राणा' इत्यादौ आहार्यारोपस्यैव लक्षणात्वादिति । न च अतद्वति तत्प्रकारक ज्ञान-मारोप·, स च कमलानि कमलानीत्यादौ तद्वति कथमिति वाच्यम्, सौरभत्वविशिष्टे कमलत्वारोपात् ।

अथ स्वायत्ते शब्दप्रयोगे किमिति वाचक शब्दं विहाय लाक्षणिकं प्रयुञ्जते, प्रयोजनादेव, तत्प्रतीतिश्च शक्यसम्बन्धमात्रादेव नेति प्राक् प्रतिपादितम् । शक्यसम्बन्धरूपलक्षणास्वीकारे नेयार्थदोषप्रतिपादन-मालङ्कारिकाणामसङ्गतम् स्यात्तत्रापि शक्यसम्बन्धात् ।

शक्यतावच्छेदकारोपे शक्यसम्बन्धो निमित्तमेतावता शक्य-सम्बन्धो लक्षणेति व्यवहार ।



## नैषधे गर्भसन्धिः[1]

**डा० सुषमा कुलश्रेष्ठः**

आचार्यैर्नाटकेषु पचसन्धीना तेषामङ्गानाञ्च निबन्धनमावश्यकं मतम्। एते सन्धयस्तेषामङ्गानि च नाट्यशास्त्रदशरूपकसाहित्य-दर्पणप्रभृतिषु ग्रन्थेष्वतिविस्तरेणोल्लिखितानि। महाकाव्यलक्षणे आचार्यैः स्पष्ट निर्दिष्ट यत् महाकाव्यमपि नाटकवत् पचसन्धि-समन्वित भवेत्। आचार्यस्य भामहस्य महाकाव्यलक्षण[2] दृष्ट्वेद प्रतीयते यत् पचसन्धीनां कल्पना यद्यपि प्रारम्भे रूपकाणि लक्ष्यी-कृत्याभवत् परमनन्तर ते महाकाव्ययोजनार्थमप्युपयोगिनः निश्रिताः। अतो महाकाव्यलक्षणे तेषामप्यन्तर्भावो विहितः। आचार्येण दण्डिना-प्युल्लेख कृत. यत् महाकाव्यस्य सर्गेषु कथायाः सन्धीना निर्वाहः क्रियते[3]। आसीन्नाटकेषु सन्धियोजनाविधान कथावस्तुनोऽपेक्षि-तस्याशस्य ग्रहणार्थमनपेक्षितस्याशस्य त्यागार्थञ्च। कथावस्तुनः सन्तुलित सुश्लिष्ट च रूप रच्यते सन्धिभिरेभिः। रुद्रटाचार्येणापि महाकाव्ये सश्लिष्टाना सन्धीना योजना निर्दिष्टा।[4] आनन्द-वर्धनोऽपि अभिनेयार्थेष्वनभिनेयार्थेषु च सर्वेष्वेव महाकाव्येषु सन्धीना सन्ध्यङ्गाना च रसानुसारिण्या. घटनाया आवश्यकता प्रतिपादयति.

---

१. अखिलभारतीयप्राच्यविद्यापरिषदः २६-शेऽधिवेशने पठितो विचारितश्च निबन्ध.।

२. काव्यालङ्कारः ( भामहप्रणीतः )—

सर्गबन्धो महाकाव्य महता च महच्च यत्।
अग्राम्यशब्दमर्थ्य च सालंकार सदाश्रयम्॥
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत्।
पंचभि. सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत्॥ १.१९-२०

३. काव्यादर्श —सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभि।
सर्वत्र भिन्नवृत्तान्तैरुपेत लोकरजकम्॥ १.१८-१९.

४. काव्यालङ्कार. ( रुद्रटप्रणीत. )—

सन्धीनपि सश्लिष्टास्तेषामन्योन्यसम्बन्धात्। १६.१६.

यतः कथाशरीरस्य पंचसन्धीनां तेषामङ्गानाञ्च रसाभिव्यञ्जनेऽस्ति पर्याप्तं योगदानम्।[1] साहित्यदर्पणकारेण विश्वनाथेनापि महाकाव्ये शृंगारवीरशान्तानामेकस्य रसस्याङ्गिरूपेणावशिष्टानामन्यरसानां नाटकसन्धीनाञ्चाङ्गरूपेण निर्वाहो निर्दिष्टः।[2]

उपरिक्तेन विवेचनेन स्पष्टमिदं यत् महाकाव्यसंधियोजनायै नाटकसन्धियोजनातुल्यमेव महत्त्वं प्रदत्तम्। सन्धीनां सम्यक् सन्निबन्धनार्थमपेक्षितमिदं यन्नाटके काव्ये वाधिकारिकप्रासङ्गिकवृत्तयोः, पंचार्थप्रकृतीनां, पंचकार्यावस्थानां चापि सम्यक् योजना भवेत्।

एकस्मिन् प्रयोजनेऽन्वितानां कथांशानामवान्तरसंम्बन्धः सन्धिरित्यभिधीयते।[3] पंचार्थप्रकृतीनां पंचकार्यावस्थानां च समन्वयेन क्रमेण पंचसन्धयः निष्पन्ना भवन्ति।[4] सन्धिशब्दस्यार्थोऽस्ति सन्धानम्। कस्यापि कथानकस्य सुन्दरनिर्वाहार्थं तस्य भागेषु विभाजनमत्यावश्यकम्। अनेन कथानकस्य सधान सुष्ठुरूपेण भवति। आचार्येणाभिनवगुप्तेन सन्धिशब्दस्य निर्वचनेन सह शोभना व्याख्या कृता—"एव या एताः कारणस्य अवस्थास्ततसम्पादक यत्कर्तुरितिवृत्तं पंचधा विभक्तम्, त एव मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्या अन्वर्थनामानः पंचसन्धयः इतिवृत्तखण्डाः सन्धीयन्त इति कृत्वा।[5]

सन्धानामवान्तरविभागा एव सन्ध्यङ्गानि कथ्यन्ते। आचार्यैरितिवृत्तस्य सुन्दरविकासक्रमस्य दृष्ट्या सन्धीना तेषामङ्गानां च निबन्धनमावश्यकमभिहितम्—"एवं प्रस्तुतफलनिर्वाहणान्तस्य अधिकारिकस्य वृत्तस्य पंचसंधित्व पूर्णसंध्यंगता च सर्वजनव्युत्पत्ति-

---

१. ध्वन्यालोक.—सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥ ३.१२.

२. साहित्यदर्पण —शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धय॥ ६.३१७.

३. दशरूपकम्—अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति। १.२३.

४. दशरूपकम्—अर्थप्रकृतयः पच पचावस्थासमन्विताः।
यथासङ्ख्येन जायन्ते मुखाद्याः पचसन्धयः॥ १.२२-२३.

५. ध्वन्यालोकः, पृ० ३३८.

दायिनी निबन्धनीया।[1] इदन्तु स्वाभाविकं निश्चितं चास्ति यत् कस्मिन्नपि नाटके काव्ये वा यदा पंचसन्धीना योजना भविष्यति, तदा तेषामङ्गानां तत्र योजना न भवेदिति तु सम्भवं नास्ति। नाटकेषु सध्यगयोजनाविषये निर्देशो नाट्यशास्त्रीयग्रन्थेषूपलभ्यते। यद्यपि केनापि प्राचीनाचार्येण महाकाव्येषु सन्ध्यगयोजनाविषये कोऽपि निर्देशो न कृतस्तथापीद स्वीकर्तुं शक्यते यत् पचसंधीना योजना यदा तेषामभीष्टा तदा सन्ध्यगयोजनापि तेषामभीष्टैव भविष्यति। आम्, इदन्तु सम्भव यत्तेषा पृथक् निर्देशस्तैरावश्यको न मतः। परवर्तिष्वाचार्येषु साहित्यदर्पणकारो विश्वनाथः "सन्ध्यङ्गानि यथालाभमत्र विधेयानि"[2] इत्युक्त्वा स्पष्ट निर्दिशति यत् महाकाव्ये सन्ध्यङ्गानामपि यथासम्भव सन्निवेशो विधातव्यः।

इत्थ सुनिश्चितमिदं यत् महाकाव्यस्य सन्ध्यङ्गनिवेश प्रत्यपि महाकाव्यप्रणेतारोऽवधान दत्तवन्तः। एतस्मादेव कारणात् सस्कृत-महाकाव्येष्वनेकानि सन्ध्यगानि प्राप्यन्ते। महाकाव्येषूपस्थितेष्वपि सन्ध्यगेष्वस्माक टीकाकारैस्तान्प्रत्यवधानप्रदानस्यावश्यकतैव नानुभूता तेषां पूर्णोपेक्षा च कृता। तेषा दृष्टिर्नाटकेष्वेव सन्ध्यगानि निभालयितु व्यापृता।

नाटयशास्त्रीयेषु ग्रन्थेषु पचसन्धीनां चतुःषष्ट्यगानामुल्लेखो विहितः, किन्त्विदमावश्यक नास्ति यत्कविः स्वकीये नाटके महाकाव्ये वा सर्वेषा सन्ध्यगाना सन्निवेशमवश्यमेव कुर्यात्। स तेषामपेक्षिते सन्निवेशने स्वतन्त्रः। यथा, यदि नाटकस्य महाकाव्यस्य वेतिवृत्तमतिसक्षिप्तमस्त्यथवा कथानकमेतादृगस्ति यस्मिन् सर्वेषां शास्त्रनिर्दिष्टागाना सन्निबन्धन संभवं नास्ति तदा कविः कतिपयान्यंगानि हातुमपि शक्नोति। प्रत्येकस्य सधेरगेष्वेको निश्चितः क्रमो भवति, किन्तु कथावस्तुनः विकासस्य दृष्टया कविस्तेषां क्रमे परिवर्तनमपि कर्तुं शक्तः। नाटके काव्ये वा प्रत्येक सधेः स्वकीयमेकं निश्चितं क्षेत्र भवति। तस्मिन्नेव च क्षेत्रे तस्य सन्धेरगानि सन्निविष्टानि भवन्ति। परं कस्यापि सन्धेरंगाना रसस्यावश्यकतानुसारमन्यस्य सन्धे. क्षेत्रेऽपि

---

१. ध्वन्यालोकः, पृ० ३३६.

२. साहित्यदर्पणः—६. महाकाव्यलक्षणे वृत्तिः, पृ० २२५.

सन्निवेशनं कर्त्तुं शक्यते, यतः रसस्यैव प्रधानता स्वीकृता ।[1] प्रसङ्गेऽस्मिन् रुद्रटाद्याचार्यैः यदिदमुक्तं यत् सर्वाणि सन्ध्यंगानि यथास्थानमेव सन्निविष्टानि भवेयुः, तद् उपयुक्त नास्ति, यतः उदाहरणेष्वस्य वैपरीत्यं दृश्यते ।[2]

श्रीहर्षप्रणीते नैषधीयचरिते महाकाव्ये पचसन्धीना तेषान्नवपचाशदगानां च सन्निबन्धनमुपलभ्यते । प्रस्तुतस्य लेखस्य विषयः उक्तकाव्ये गर्भसन्धेस्तस्यागानां च विवेचनमस्ति ।

प्रतिमुखसंधौ लक्ष्यालक्ष्यरूपतया स्तोकोद्भिन्नस्य बीजस्य सविशेषोद्भेदपूर्वकः सान्तरायो लाभः, पुनर्विच्छेदः पुनः प्राप्तिः, पुनर्विच्छेदः पुनश्च तस्यैवान्वेषणं वारवारं यत्र भवति सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसन्धिरित्यभिधीयते । अस्मिन् पताकार्थप्रवृत्तेः प्राप्त्याशावस्थायाश्च मिश्रणं भवति किन्तु तत्र पताकोपस्थितिरनिवार्या नास्ति । सा स्यान्न वा परं प्राप्तिसंभवस्तु तत्र स्यादेव ।[3]

नैषधे इन्द्रादिदेवानां विदर्भजाप्राप्त्यर्थं प्रयासोऽस्त्येक दूरव्यापि कथानकम् ।[4] अतएव तत्र पताकाऽर्थप्रकृतिरस्ति । इन्द्रादिदेवाश्च पताकानायकपदमलकुर्वन्ति । कैतवपटुनेन्द्रेण देवदौत्य स्वीकर्तुं नल प्रति याचन, नलस्य येन केनचिदपि प्रकारेण देवदूतरूपेण गमन, शक्रादिदेवाना दूतीना दमयन्त्या कृतं निराकरणं निभाल्य नलस्य हर्षणं, नलदमयन्त्योः संभाषणम्, अन्ते च नलस्य स्वरूपप्रकटीकरणं, स्वयंवरे चागमनस्य वचनप्रदानमस्ति प्राप्त्याशावस्था, यतोऽत्र फलप्राप्तेराशोपायस्यापायस्य चाशकयावृतास्ति, किन्त्वस्ति तत्र प्राप्ति-

---

१. साहित्यदर्पण.—चतुःषष्टिविधं ह्येतदंग प्रोक्तं मनीषिभि. ।
कुर्यादनियते तस्य सधावपि निवेशनम् ॥
रसानुगुणता वीक्ष्य रसस्यैव हि मुख्यता । ६.११५-११६.

२. साहित्यदर्पणः—यत्तु रुद्रटादिभिः 'नियम एव' इत्युक्तं तल्लक्ष्यविरुद्धम् । ६.११५-११६. ( वृत्तिः )

३. दशरूपकम्—गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहु. ।
द्वादशांग पताका स्यान्न वा स्यात्प्राप्तिसंभव. ॥ १.३६.

४. नैषधम्—८.४५-१३७, १०.१०, १७-२४, ३३-३७, ४५-४८, १३.१-५५, १४.१-६४.

संभावना। एव नलस्य देवदौत्यागीकरणे, दूतीदमयन्ती-संवादे, दूतरूप-नलदमयन्तीसवादे च फलप्रधानस्योपायस्यानेकवार ह्रासोऽन्वेषणं च प्राप्यतेऽतएवोक्ताशे गर्भसन्धिरस्ति।

गर्भसधे: दशरूपकानुसार द्वादश, नाट्यशास्त्रसाहित्यदर्पणयोश्चा-नुसार त्रयोदशागानि भवन्ति। दशरूपकानुसार सन्तीमान्यस्य सन्धे-रगानि—

| | |
|---|---|
| १—अभूताहरणम् | ७—अनुमानम् |
| २—मार्गः | ८—तोटकम् |
| ३—रूपम् | ९—अधिबलम् |
| ४—उदाहरणम् | १०—उद्वेगः |
| ५—क्रम. | ११—सभ्रम |
| ६—सग्रह | १२—आक्षेप इति। |

नाट्यशास्त्रसाहित्यदर्पणयो. यदतिरिक्तमंगमुल्लिखित तत्तु 'प्रार्थना'—स्ति। तत्र

**अभूताहरणम्**

यत्रच्छद्मकपटयुक्तवचनप्रयोगो वा भवेत्तत्राभूताहरण भवति।[1] नैषधस्य पंचमे सर्गे गर्भागमिद प्राप्यते यत्रेन्द्र नल प्रति कथयति—नल! अर्थिनो वय त्वा प्राप्ता इति तात्पर्यं जानीहि। क्षणमध्वश्रम नीत्वा प्रयोजनज्ञापन करिष्याम.। × × × × भूतलहिमाशो! वयं दमयन्त्या विवाहोत्सवमभिलषेमहि। निर्जितस्मर! स्मरभीति विहाय भैमीविवाहोत्सवेऽस्माक दूतकर्म सम्पादय।[2] दमयन्त्यनुरक्तेन नलेन स्वेप्सितं साधयितुमिन्द्र ईदृशानि

१. नाट्यशास्त्रम्—कपटापाश्रयं यत्तदभूताहरण विदु। २१.८३.
दशरूपकम्—अभूताहरणं छद्म। १.३८.
साहित्यदर्पण.—तत्र व्याजाश्रय वाक्यमभूनाहरणं मतम्। ६.९६.

२. नैषधम्—अर्थिनो वयममी समुपैमस्त्वा किलेति फलितार्थमवेहि।
अध्वनः क्षणमपास्य च खेदं कुर्महे भवति कार्यनिवेदम्॥
पाणिपीडनमिमे दमयन्त्याः कामयेमहि महीमिहिकांशो।
दूत्यमत्र कुरु नः स्मरभीतिं निर्जितस्मर! चिरस्य निरस्य॥
५. ७७, ९९.

कपटयुक्तानि वचनानि प्रयुंक्ते । इन्द्रस्य कपटयुक्तवचनप्रयोगादत्राभूताहरणमस्ति ।

**मार्गः**

यत्रार्थप्राप्तिरूपनिश्चिततत्त्वस्य कीर्तनं भवेत्तत्र मार्गो भवति ।[1] अत्र नायकं नायिकां वा प्रति केनापि हितैषिणा पात्रेण फलप्राप्तिमार्गस्य सूचना दीयते । नैषधस्य तृतीये सर्गेऽङ्गमिदमुपलभ्यते यत्र दमयन्त्या नलवरणाभिलाषं ज्ञात्वा हंसो दमयन्तीं कथयति—"राजपुत्रि, त्वदुक्तं यदि सत्यं तर्ह्यस्मिन्कार्ये स्वकरणीयं न पश्यामि यतस्त्वां नलं चातिशयेन तापयता कामेनैवेयं योजना जनिता । त्वामेव ध्यायतस्त्वदासंगाद्विषयान्तरव्यावृत्तानां पुण्यैरद्य त्वां प्राप्य पीयूषपानजनिततृप्तितुल्यतृप्तिभाजा तस्य नलस्य बहिरिन्द्रियाणां स्वकीयं देवत्वं सफलमस्तु ।[2] नायकानायिकयोः शुभैषिणा पात्रेण हंसेनार्थप्राप्तिरूपमनिश्चितत्वस्य कीर्तनादत्र मार्गोऽस्ति ।

**रूपम्**

यत्र फलप्राप्तेः प्रतीक्षां कुर्वन्तः नायकादयः तर्कवितर्कमयानि वाक्यानि प्रयुञ्जते तत्र रूपमिति गर्भाङ्गं भवति ।[3] नैषधस्य पंचमे सर्गेऽङ्गमिदमुपलभ्यते यत्र इन्द्रस्य "अर्थिनो वयम्" इति वचनं श्रुत्वा

---

१. नाट्यशास्त्रम्—तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ।२१.८३
दशरूपकम्—मार्गस्तत्त्वार्थकीर्तनम् । १.३८
साहित्यदर्पणः—तत्त्वार्थकथनं मार्गः ।६.९६

२. नैषधम्—इदं यदि क्ष्मापतिपुत्रि ! तत्त्वं पश्यामि तन्न स्वविधेयमस्मिन् ।
त्वामुच्चकैस्तापयता नलं च पञ्चेषुणैवाजनि योजनेयम् ॥
त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासव्रतिनां तपोभिः ।
त्वामद्य लब्ध्वामृततृप्तिभाजां स्वं देवभूयं चरितार्थमस्तु ॥
३.१००-१०१

३. नाट्यशास्त्रम्—चित्रार्थसमवाये तु वितर्को रूपमिष्यते । २१. ८४
दशरूपकम्—रूपं वितर्कवद्वाक्यम् । १.३९
साहित्यदर्पणः—रूपं वाक्यं वितर्कवत् । ६.९९

नलस्य मनस्यनेके वितर्का आयान्ति ।[1] नलो विचारयति—"यदि मत्स-काशादखिलैः याचकैः प्राणपर्यन्त याच्यमान वस्त्वपि सुलभं तदा-र्थिने देवेन्द्राय किं दत्त्वा ममान्तःकरणं सन्तुष्येत् । भूयस्याः भैम्याः षोडशीमपि कलां नार्हति सा भीमजा जीवितादपि धनादपि गुर्वी मम हृदये केवलं विद्यते । सा विदर्भजा मम नैव ( यत्र स्वकीयत्वं तदेव दातुं शक्यते भैम्या स्वकीयत्वाभावात्तद्वितरणमशक्यमिति कथं चेतः संतुष्यतीति भावः ) । एषामभीप्सित वस्तु कथं ज्ञायताम्, अयाचितं कथ दीयताम् । यो दाताऽर्थ्याकांक्षां जानन्नपि याञ्चाकाल प्रतीक्षते, तं दातारं धिगस्तु ।[2] नलस्य तर्कवितर्कवर्णनादत्रास्ति रूपं नामगर्भाङ्गम् ।

**उदाहरणम्**

उत्कर्षयुक्त वचनमुदाहरणमित्यभिधीयते ।[3] चतुर्थे सर्गेऽङ्गमिदं दृष्टिपथमायाति यत्र नृपतिर्भीमः लज्जावनतमुखायै सुतायै दमयन्त्यै वितरत्याशिषम् "वत्से ! कतिपयैरेव दिवसैः स्वयंवरे बहुगुणं स्वेप्सितं वल्लभ लभस्व" ।[4] अत्र भीमेन दमयन्त्यै अभिलषितवरप्राप्तिरूपम् उत्कर्षयुक्तं वचनं प्रयुक्तमत एवेदमस्त्युदाहरणं नाम गर्भाङ्गम् ।

---

१ नैषधम्—५.८०-८३,९०　　२. नैषधम्—५.८१-८३

जीवितावधि वनीपकमात्रैर्याच्यमानमखिलैः सुलभ यत् ।
अर्थिने परिवृढाय सुराणा किं वितीर्य परितुष्यतु चेत ।
भीमजा च हृदि मे परमास्ते जीवितादपि धनादपि गुर्वी ।
न स्वमेव मम साऽर्हति यस्याः षोडशीमपि कला किल नोर्वी ।।
मीयता कथमभीप्सितमेषा दीयता द्रुतमयाचितमेव ।
तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ।।

३. नाट्यशास्त्रम्—यत्तु सातिशय वाक्य तदुदाहरणमिष्यते ।२१.८४
दशरूपकम्—सोत्कर्षं स्यादुदाहृतिः ।१.३९
साहित्यदर्पणः—उदाहरणमुत्कर्षयुक्त वचनमुच्यते ।६.९६

४. नैषधम्—व्यतरदथ पिताशिषं सुतायै नतशिरसे मुहुरुन्नमय्य मौलिम् ।
'दयितमभिमतं स्वयंवरे त्व गुणमयमाप्नुहि वासरैः कियद्भिः'।।
४.१११

**क्रम:**

दशरूपकानुसार सचिन्त्यमानाप्तिः क्रम इत्यभिधीयते[1]। नैषधस्य नवमे सर्गे गर्भाङ्गमिद दृश्यते यदा दूतरूपनलस्य वचनानि श्रुत्वा नलविरहविधुरा विलपन्ती दमयन्ती नल लक्ष्यीकृत्य कथयति— "सा भैमी त्वय्यनुरक्ता सती त्वत्प्राप्त्यभावाज्जन्मान्तरेऽपि त्वत्प्राप्त्यर्थं मृतेति ते कर्णपथ कथ नोपैष्यति ? प्राणेश ! यद्यप्यधुना मा नानुगृह्णासि तथापि तस्मिन्नपि समये तावत् कृपालेशेन मा समनुग्रहीष्यसे। ममेद हृदय विदरीतु सादर तस्मादर्थिकल्पद्रुम ! त्वामह किंचिद्याचे। हृदि विदारणलक्षण मार्गमवाप्य मे विनष्टैरथ च निष्फलै· प्राणैः सार्ध प्राणप्रियः स त्व मा गम·"।[2] दमयन्त्या दीनवचनानीमानि श्रुत्वा विह्वलो भूत्वा नलो विस्मृत्य स्वदूतकर्मतामलीकमालपति—'अयि प्रिये ! कस्य कृते विलप्यते ? मुखमश्रुबिन्दुभि विलिप्यते। हा कष्टम् ! कटाक्षविलासवत्या त्वया पुरस्त्वच्चरणशरणीभवन्नय नलो न वीक्षित किम् ?'[3] प्रस्तुतेषु श्लोकार्थेषु यदा दमयन्तीष्टप्राप्ति (नलप्राप्ति) चिन्तयन्त्यासीत्तदैव नलस्य तैरालपितै स्वरूपप्रकाशनेन च तस्या इष्टप्राप्तिर्जाता। अतएवोक्ताशे क्रमोऽस्ति।

आचार्येण धनञ्जयेनास्याङ्गस्यैकान्या परिभाषापि निर्दिष्टा।[4]

---

१. दशरूपकम्—क्रम संचिन्त्यमानाप्तिः।१।३६

२. नैषधम्—कथावशेष तव सा कृते गतेत्युपैष्यति श्रोत्रपथ कथं न ते ?
दयाणुना मा समनुग्रहीष्यसे तदापि तावद्यदि नाथ ! नाधुना ॥
ममादरीद विदरीतुमान्तर तदर्थिकल्पद्रुम ! किंचिदर्थये।
भिदा हृदि द्वारमवाप्य मा स मे हतासुभिः प्राणसम सम गम ॥
९.९९-१००.

३. नैषधम्—अयि प्रिये ! कस्य कृते विलप्यते विलिप्यते हा मुखमश्रुबिन्दुभिः।
पुरस्त्वयालोकि नमन्नय न किं तिरश्चलल्लोचनलीलया नलः ॥
९.१०३.

४. दशरूपकम्—भावज्ञानमथापरे। १.३९.

तदनुसारमपरेषा भावज्ञानं क्रमो भवति। नाट्यशास्त्रसाहित्यदर्पणयोरप्यस्याङ्गस्येयमेव परिभाषा प्राप्यते।[1]

**संग्रहः**

साम्ना दानेन च सम्पन्नोक्तिः संग्रह इत्युच्यते।[2] पंचमे सर्गे इदमङग प्राप्यते यत्र नल इन्द्रादिदेवान् प्रति स्वविनय प्रकटीकुर्वन् कथयति—"स्वल्पं मत्तप. क्व? भवद्दर्शनरूप महाफल वा क्व? नूनमस्माक पूर्वपुरुषाणा पुण्यानि भवद्दर्शनलक्षणं फलं जनयन्ति सर्वोत्कर्षेण वर्तन्ते। ..."प्राणपर्यन्त ततोऽप्यधिकं वा यत्किमपि वस्तु अस्मात् मनुष्यबालकाद्भवद्भिरभिलषित, सोऽय नृबालो तेन वस्तुना युष्माक चरण पूजयतु। ईदृगलभ्यं वस्तु पुनः किमस्तु, ब्रूत।[3] अत्र नलकृतात् सामदानोक्तिप्रयोगादस्ति सग्रहो नाम गर्भाङ्गम्।

**अनुमानम्**

यत्र केषांचित् हेतूनामाधारेण नायकादिभिरभ्यूहन क्रियते तत्रानुमान भवति।[4] पचमे सर्गेऽङ्गमिदमीक्षणपथमवतरति यत्रेन्द्रस्य "अर्थिनो वयममी समुपैमस्त्वा"-मितिवचन श्रुतिपथं नीत्वा नलेन

---

१. नाट्यशास्त्रम्—भावतत्त्वोपलब्धिस्तु क्रम इत्यभिधीयते। २१.८५.
　साहित्यदर्पण—भावतत्त्वोपलब्धिस्तु क्रम स्यात्। ६ ९७.

२. नाट्यशास्त्रम्—सामदानार्थसंयोग संग्रह. स तु कीर्तित.। २१.८५.
　दशरूपकम्—सग्रह. सामदानोक्ति। १।४०.
　साहित्यदर्पण.—संग्रह. पुन सामदानार्थसम्पन्न.। ६ ९८.

३. नैषधम्—मत्तपः क्व नु तनु क्व फल वा यूयमीक्षणपथं व्रजयेति।
　　ईदृश परिणमन्ति पुनर्नः पूर्वपुरुषतपांसि जयन्ति॥
　　जीविताववधि किमप्यधिकं वा यन्मनीषितमितो नरडिम्भात्।
　　तेन वश्चरणमर्चितु सोऽयं ब्रूत वस्तु पुनरस्तु किमीदृक्॥
　　　　　　　　　　　　५.९५, ९७.

४. नाट्यशास्त्रम्—रूपानुरूपगमनमनुमानमिति स्मृतम्। २१.८६.
　दशरूपकम्—अभ्यूहो लिङ्गतोऽनुमा। १.४०.
　साहित्यदर्पणः—लिंगादूहोऽनुमानता। ६.९८.

चिराय संशयितं विचारितं च—मम याचकभूतैर्दिक्पालैः किं वस्तु दुर्लभम् । यद्दिक्पालैर्दुर्लभं वस्तु तन्मदायत्तं कथम् ? ···"जगत्यस्मिन् वदान्यमात्रमनादृत्य मा याचमानैरमीभिरिन्द्रादिभिर्मयि यद्यशः स्थापितं तस्य विनिमयस्तदीयः कतमस्तु पदार्थो भवतु ।"[1] अत्र नलेन तर्कसरणिमनुसृत्याभ्यूहनं कृतम् । अत एवात्रानुमानमस्ति ।

### तोटकम्

क्रोधयुक्तवचनं तोटकमित्यभिधीयते ।[2] नैषधस्य सप्तदशसर्गे गर्भाङ्गमिदं दृश्यते यत्र कलिः देवान् प्रति कथयति "सा भैमी यं नलं पतित्वेन वृतवती, अपराधिनं तं नलं विहाय किमर्थं मह्यमक्षान्तिभाजः भवथ ? कथयत, अपराधमन्दिरात् ( भवदनादररूपदोषाकरादित्यर्थः ) तस्मात् नलात् अस्मिन्नेवाह्नि तां भैमीमाहरामि ।[3] अत्र क्रुद्धः कलिः नलदमयन्त्यौ प्रति स्वक्रोधं प्रकटीकरोति । अतोऽत्र तोटकमस्ति । सप्तदशसर्गस्यान्यस्थलेष्वपि गर्भाङ्गमिदमुपलभ्यते ।[4]

### अधिबलम्

नाट्यशास्त्रसाहित्यदर्पणयोरनुसारं कपटेन कस्यचिदनुसंधानमधिबलमिति कथ्यते ।[5] धनंजयमते तु यत्रैकेन पात्रेणान्यपात्रस्य भावो

---

१. नैषधम्—दुर्लभं दिगधिपैः किममीभिस्तादृशं कथमहो मदधीनम् ।
ईदृशं मनसिकृत्य विरोधं नैषधेन समशायि चिराय ॥
माममीभिरिह याचितवद्भिर्दातृजातमवमत्य जगत्याम् ।
यद्यशो मयि निवेशितमेतन्निष्क्रयोऽस्तु कतमस्तु तदीयः ॥
५.८०, ६०.

२. नाट्यशास्त्रम्—संरम्भवचनं चैव तोटकं नाम संज्ञितम् । २१.८७.
दशरूपकम्—सरब्धं तोटकं वचः । १.४०.
साहित्यदर्पण —त्रो(तो)टकं पुनः सरब्धवाक् । ६.९९.

३ नैषधम्—सा वव्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषः स्थ किम् ।
ब्रूताग सद्मनस्तस्माच्छद्मनाद्याच्छिनद्मि ताम् ॥ १७.१३१.

४. नैषधम्—१७.१२२-१२४.

५ नाट्यशास्त्रम्—कपटेनातिसंधानं ज्ञेयं त्वधिबलं बुधैः । २१.८८
साहित्यदर्पण.—अधिबलमभिसंधिश्छलेन । ६.९९.

ज्ञायते तत्राधिबलं भवति ।[1] दशरूपकस्याधिबलगर्भाङ्गस्येयं परिभाषा नाट्यशास्त्रसाहित्यदर्पणयोः क्रमगर्भाङ्गपरिभाषया पूर्णरूपेण संवदति । दशरूपककारेणास्याङ्गस्यैकान्यापि परिभाषा निर्दिष्टा । केषांचिद्विदुषां मते तोटकस्यान्यथाभावोऽधिबलमस्ति ।[2] धनञ्जयमते क्रुद्धवचनं तोटकमस्तीति क्रुद्धवचनस्य प्रतीपभूतं विनीतं दीनं च वचनमधिबलमस्ति । नैषधस्य पंचमे सर्गेऽङ्गमिदमुपलभ्यते यत्र नल इन्द्रस्य वचनैस्तस्य कपट ज्ञात्वा तदनुकूलमेव वचनं प्रयुंक्ते । नलस्येन्द्रकपटज्ञानस्य सूचन तेन श्लोकेन भवति यत्र वर्णितम्—"प्राज्ञः स नल इन्द्रस्य तेन तेन 'पाडिपीडनमहं' ( नैषधम् ५।६६ ), 'त्वामिहैवमनिवेश्य' ( नैषधम् ५।१०१ ) इत्यादि वचसैव कपटं जानाति स्म अथ तदुचितां ( कपटयोग्यां ) वाचमवोचद्यस्मात् कपटिष्वकापट्य नीतिर्न भवति ।"[3] अत्र नलेनेन्द्रस्य भावो ज्ञातोऽतएवात्राधिबलमस्ति दशरूपकोपलब्धप्रथमपरिभाषानुसारम् ।

**उद्वेगः**

भरतमुनिमते नृपारिदस्यूत्थ भयमुद्वेग इत्यभिधीयते ।[4] आचार्यविश्वनाथमते नृपादिजनिता भीतिरुद्वेगोऽस्ति ।[5] धनंजयमते तु शत्रुकृता भीतिरुद्वेगो भवति ।[6] तिसृणामेव परिभाषाणा सारस्त्वयमेव यत् नृपजनिता शत्रुजनिता वा भीतिरुद्वेगोऽस्ति । नैषधस्य सप्तदशसर्गे गर्भाङ्गमिद दृश्यते यत्र वर्णितम्—"विभीतकवृक्षे कल्पितावासः कलिः अग्निहोत्रवतः, यज्ञे दीक्षितात्, क्षत्रियात् राज्ञो नलात्तथा भयं प्राप यथा वृक्षे विरचितावासः काकादि· पक्षी पुरुषो वा वृक्षारूढो भक्षार्थः स्थायी वा गृहोपरि दृष्टाङ्गारमक्षिपारावतविशेषाद्धूमं

३. दशरूपकम्—अधिबलमभिसन्धि ।१.४१

४. दशरूपकम्—तोटकस्यान्यथाभावं ब्रुवतेऽधिबल बुधा. । १.४१

५. नैषधम्—तेन तेन वचसैव मघोन स स्म वेद कपटं पटुरुच्चैः ।
आचरत्तदुचितामथ वाणीमार्जव हि कुटिलेषु न नीति. । ५ १०३

६. नाट्यशास्त्रम्—भय नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः । २१.८८

७. साहित्यदर्पण.—नृपादिजनिता भीतिरुद्वेगः परिकीर्तितः । ६.१००,

८. दशरूपकम्—उद्वेगोऽरिकृता भीति. ।१.४२

प्रापत् पूर्वं कदाचित् ।''[१] शत्रुभूतात् राज्ञो नलात् कलेः भीतिवर्णनाद-त्रोद्वेगोऽस्ति ।

एवमेवास्यैव सर्गस्यान्यस्थलेष्वपि गर्भाङ्गमिदमुपलभ्यते यत्र गायत्रीदेव्याः, स्नातकतस्तपस्विनः, मौनव्रततिनश्च भीतस्य कलेः वर्णनं कृतम् ।[२]

**संभ्रम**

दशरूपकानुसारमस्याङ्गस्य नाम संभ्रमो नाट्यशास्त्रसाहित्य-दर्पणयोरनुसारं च विद्रव इत्यस्ति परं त्रिष्वपि ग्रन्थेषु अस्याङ्गस्य परिभाषा प्रायः समानैवास्ति । भरतमुनिमते नृपाग्निभयसंयुक्तः संग्रामो विद्रवोऽस्ति ।[३] आचार्यविश्वनाथमते शङ्काभयत्रासजनितः संग्रामो विद्रव इति कथ्यते ।[४] धनञ्जयमते तु यत्र पात्रेषु शङ्का-यास्त्रासस्य च सचारो भवति तत्र सग्रामो मन्यते ।[५] सप्तदशसर्गे गर्भाङ्गमिद दृष्टिपथमायाति यत्र वर्णित यत् "नलस्य राजधान्या वेदाध्येतृमुखेभ्यः क्रमसज्ञ ग्रन्थ श्रृण्वतोऽस्य कलेश्चरणः दूरं नितरा संकुचितोऽवर्तत ।" नलस्य पुरे प्रतिगृह ब्राह्मणादिवर्णचतुष्टयैः पितृणा तर्पणे क्षिप्तात् कृष्णवर्णात् तिलात् स कलि. वृतान्तादिव दूर नित-रामत्रसत् ।''[६] अत्र नलभीते कलौ शङ्कायास्त्रासस्य च सचारो वर्णि-तोऽतएवात्र सग्रामोऽस्ति ।

---

१. नैषधम्—उद्भिद्विरचितावास कपोतादिव तत्र स ।
राज्ञ साग्नेर्द्विजादस्मात्संत्रासं प्राप दीक्षितात् ।। १७.२१५.

२ नैषधम्—१७ १७४, १८४.

३. नाट्यशास्त्रम्—नृपाग्निभयसयुक्त. सभ्रमो विद्रव स्मृतः । २१.८९.

४. साहित्यदर्पणः—शङ्काभयत्रासकृतः सभ्रमो विद्रवो मत । ६ १००.

५. दशरूपकम्—शङ्कात्रासौ च सभ्रम । १.४२.

६. नैषधम्—श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयत. क्रमम् ।
क्रम संकुचितस्तस्य पुरे दूरमवर्तत ।।
पितृणा तर्पणे वर्णै. कीर्णाद्वेश्मनि वेश्मनि ।
कालादिव तिलात्कालाद्दूरमत्रसदत्र सः ।। १७.१६४, १६६

**आक्षेपः**

दशरूपकानुसारं यत्र गर्भबीजस्योद्भेदनं भवति तत्राक्षेप मन्यते।[1] अङ्गमिदं नाट्यशास्त्रे आक्षिप्तमिति साहित्यदर्पणे च क्षिप्तिरिति नाम्नोल्लिखितम्।[2] नैषधस्य नवमे सर्गे गर्भाङ्गमिदमस्ति यत्र वर्णितं यत् 'स हंसः तत्पक्षरवोर्ध्वविलोकिनमनन्तरं च' कृतमहोपकारः स एवैष पक्षी "इति भणन्तं तं नलमवदत्" निष्कृप नल! एनां भैमीं निराशतां मा स्म नैषीः कुतः अतः परमियं केवलमसून् विहास्यति। नल! भवान् देवानां प्रयोजनसिद्धये एतावत्प्रयस्यापि स्वीयानुचितकारित्वं जानन् कूटसाक्षीभवनोचितो न भवति यतः सतां चित्तशुद्धिः आत्मसाक्षिका।[3] दमयन्त्या अतिकरुणं विलपित श्रुत्वातिविह्वलेन नलेन स्वरूपं प्रकाशितम्। अनेन तस्यातितरा ग्लानिर्जाता। इदानीं नलः पश्चात्ताप कुर्वन्नेवासीद्यत् स राजहंसस्तत्रोपस्थितः। राजहंसस्योक्तै वचनैर्गर्भबीजमुद्भिन्नम्। राजहंसस्य तानि वचनानि नलदमयन्त्योः भाविनो मिलनस्य निदर्शकानि। अतोऽत्र आक्षेप इति गर्भाङ्गमस्ति।

प्रार्थना

नाट्यशास्त्रसाहित्यदर्पणयोः गर्भसन्धे यदतिरिक्तमङ्गमुल्लिखितं तत्तु प्रार्थनास्ति। रतिहर्षोत्सवानां प्रार्थनं प्रार्थनेत्यभिधीयते।[4] तैरेवाचार्यैः गर्भसंधौ परिगणनमस्याङ्गस्य क्रियते यैर्निर्वहणे भूतावसर-

---

१. दशरूपकम्—गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः। १.४२.

२. नाट्यशास्त्रम्—गर्भस्योद्भेदन यत्तु तदाक्षिप्तमिति स्मृतम्। २१.८७.
साहित्यदर्पण—रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्। ६.६६.

३. नैषधम्—नल स तत्पक्षरवोर्ध्ववीक्षिणं स एष पक्षीति भणन्तमभ्यधात्।
नयादयैनामति मा निराशतामसून्विहातेयमतः पर परम्॥
सुरेषु पश्यन्निजसापराधतामियत्प्रयस्यापि तदर्थसिद्धये।
न कूटसाक्षीभवनोचितो भवान्सतां हि चेतःशुचितात्मसाक्षिका॥
९.११८-१२६.

४. नाट्यशास्त्रम्—रतिहर्षोत्सवाद्यर्थप्रार्थना भवेत्। २१.८६.
साहित्यदर्पण—रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत्। ६.६८.

त्वात्प्रशंस्तिनामाङ्गं न मन्यते ।[1] मया निर्वहणसधौ प्रशस्त्यङ्गस्य महत्ता स्वीक्रियतेऽतएवात्र प्रार्थनाङ्गस्योदाहरणं न प्रस्तूयते ।

एवं गर्भसन्धेः सर्वेषामेवाङ्गाना सन्निबन्धनं महाकविना श्रीहर्षेण परमनैपुण्येन स्वकाव्ये कृतम् ।



---

१. साहित्यदर्पण:–इद च प्रार्थनाख्यमङ्ग, यन्मते निर्वहणे भूतावसरत्वा-त्प्रशस्तिनामाङ्गं, नास्ति, तन्मतानुसारेणोक्तम् । अन्यथा पचषष्टिसङ्ख्यत्वप्रसङ्गात्, पृ० १६१.

## संदर्भ-ग्रन्थ-सूची

१—काव्यादर्श: (दण्डिप्रणीत:), गवर्नमेन्ट सीरीज-४ पूना, १६३८ ई.

२—काव्यालङ्कार: ( भामहप्रणीत: ), बिहार राष्ट्रभाषा परिषद्, पटना, १६६२ ई०

३—काव्यालङ्कार: (रुद्रटप्रणीत.), नमिसाधुटिप्पणीयुत:, काव्यमाला निर्णय सागर प्रेस, बम्बई, १६२८ ई०

४—दशरूपकम् (धनंजयप्रणीतम्), अनुवादक: डा० भोलाशङ्करव्यास:, चौखम्बा विद्याभवन, बनारस, १६५५ ई०

५—ध्वन्यालोक. ( आनन्दवर्धनप्रणीत: ), लोचनेन बालप्रियया च सहित:, चौखम्बा सस्कृत सीरीज, १६४० ई०

६—नाट्यशास्त्रम् ( भरतमुनिप्रणीतम् ), अनुवादक. मनमोहनघोष:, प्रथमभाग:, मनीषा ग्रन्थमाला प्राइवेट लिमिटेड, कलकत्ता–१२, १६६७ ई०

७—नैषधीयचरितम् (श्रीहर्षप्रणतिम्), नैषधीयप्रकाशाख्यव्याख्यायुत, निर्णय सागर प्रेस, बम्बई–२, १६५२ ई०

८—साहित्यदर्पण: ( विश्वनाथप्रणीत: ), विमलाव्याख्यासहित. मोतीलाल बनारसीदास, दिल्ली, वाराणसी, पटना, १६६१ ई०

# भारवेर्जीवनदृष्टिः

राधावल्लभः त्रिपाठी

संस्कृतकविषु महाकवेर्भारवेर्दृष्टिः अन्तःप्रज्ञया अनुस्यूता मौलिकी च बभूव। कविवरोऽसौ स्वीयप्रातिभज्योतिषा समुन्मीलितान् विचारान् आदर्शांश्च काव्ये किरातार्जुनीये अभिव्यानक्। अत एव भारवेर्दर्शने इतरकविष्वनुपलभ्यमानं किमपि वैशिष्ट्यं विलोकयामः।

**साध्य-निष्ठा**

भूतार्थकथनाय दृश्यते कवेरमुष्य महानाग्रहः। जीवने यत्किमपि बाह्येन रमणीयमवलोक्यते तदेव केवलं भारविर्नाकाङ्क्षति, अपितु यन्मङ्गलमातनोति श्रेयो विदधति च तदसौ अभीप्सते। अतः काव्ये कविरसौ अर्थगौरवमेव निकषोपलभूतमित्यमन्यत। हित-रमणीययोर्मध्ये हितं वचः एव वरीयानित्यवृणोद् भारविः। कथितं हि किरातकाव्ये दूतमुखादनेन—**'हितं मनोहारि च दुर्लभं वचः'** (१.४) इति, **'स किं सखा साधु न शास्ति योऽधिपम्'**(१.५)–ति च। अथ च—

**विहितां प्रियया मनः प्रियामथ निश्चित्य गिरं गरीयसीम्।**
**उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः॥२.१॥**

इत्यत्रापि प्रियाया मनःप्रियां गिरं गरीयसीं सारप्राणां चेति निश्चित्येव भीमस्तां प्रशंसते। भीमस्याहितमपि भारवेः शब्दसरणेरनुसारम् उपपत्तिमद् युक्तिसंगतं उदारार्थं च चकास्ति। इत्थं भारविः केवलासु वक्रभणितिषु न विश्वसिति, अपितु वाण्याः सारप्राणतां हितकारकतां चाशंसते। वाणी आपाततो अरमणीयापि परिणामसुखा गरीयसी चावश्यं स्यादिति पुनः प्रतिपादितं तेन। एतादृशी वाक् कविना अतिवीर्यवता औषधेनोपमिता।[1]

भारविकृतं वाग्विवेचनमिदं तदीयजीवनदृष्टिं द्योतयति। जीवने यत्किमपि सार्थकं सहितं वा वरीवर्ति, तत्र द्राघिष्ठा आस्था कवेर-

---

१. परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम्।
अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः॥२.४॥

मुष्य विद्यमाना आस्ते। सुन्दरात् शिवमभिप्रेत विद्यते तस्य, माधुर्य वैचित्र्य रसास्वादं वा इदम्प्रथमतया नासौ आकाक्षति, सत्प्रयोजन तस्य सर्वोपरि काम्यम्। श्रेयसि शिवे च सुतरामसौ श्रद्दधाति।

**साध्यम्**

इत्थं सौन्दर्यं भारवेः कृते साध्य नास्ति, साध्यं तु विद्यते शिवं सत्य वा, सौन्दर्य तदीयोपकरणता काम गच्छतु। सौष्टवौदार्य-प्रभृतयो गुणा यदि सन्ति तर्हि साधु, किन्तु विनिश्चितार्थता[1] न्यायनिर्णीतसारत्व[2] चावश्यमेव स्याताम्। इत्थं कविवरोऽसौ मूल्य-निष्ठ जीवनं कामयते।

वैयक्तिकनिर्वाणं भारविर्नाकाक्षति, भौतिकसुखोपलब्धिमपि चरमसाध्यत्वेन असौ न स्वीकरोति। मनस्विनः पुरुषकारः अन्याय-प्रतीकाराय आततायिना सर्वनाशाय जयश्रिया अवाप्तये विनियुक्त. स्यादिति भारवि. समीहते। नायकमुखात् कविना जीवनस्य साध्य निरूपितम्—

**न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम्।**
**नानित्यताशनेस्त्रस्यन् विविक्त ब्रह्मणः पदम्॥**
**प्रमार्ष्टुमयशःपंकमिच्छेयं छद्मना कृतम्।**
**वैधव्यतापितारातिवनितालोचनाम्बुभिः॥** ११ ६६,६७

मनस्विनां मार्गे निर्वाणप्राप्तिप्रयत्नोऽपि भारविमते अन्तरायः—

**वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम्।**
**निर्वाणमपि मन्येऽहमन्तरायं जयाश्रयः॥** ११.६९

तपसः साधनाया उद्यमस्य च लक्ष्यमेकमेव वरीवर्ति—जीवने जयश्रियः प्राप्तिः। अत एवार्जुनतपसा परितुष्ट आह भगवान् पिनाकपाणि—**'व्रज जय रिपुलोकम्'** (१८.४८) इति। जयश्रिय बहुमन्यमानेन भारविणा **"परमं लाभमरातिभंगमाहु"**–(१३ १२)–रिति सिद्धान्तितमासीत्। किन्तु रिपुजयः ससारम्य कल्याणाय भवेन्न दुःखाय। शिवं च मगल च भारवि. साध्यत्वेन निर्धारितवान्,

१. किराते १.३

२ तत्रैव ११ ३९

अतएव श्रेय तन्वन्तीमेव जयश्रियमसौ कामयते, पुरुषार्थस्य विनियोग. परेषा परित्राणाय जगद्हितायैव च द्रष्टुमसौ अभिलषति। अत एव "स क्षत्रियस्त्राणसहः सता यस्तत् कार्मुक कर्मसु यस्य शक्ति" (३.४८) इति निगदित कविना।

जीवने जयश्रिय समालिङ्गमानः एव जनः प्रशस्यः। शत्रुमविजित्यैव यस्यामर्षः प्रशान्तो भवेत् स न कदापि पुरुषाभिधानार्हः—

**अनिर्जयेन द्विषतां यस्यामर्षः प्रशाम्यति।**
**पुरुषोक्ति. कथं तस्मिन् ब्रूहि त्वं हि तपोधन ॥ ११.७१**

अभिमानधनता तेजस्विता मनस्विता च भृशमसौ जीवने चकाक्ष। परैरवधूताः पुरुषापसदाः पशव इति तृणानीव वा भवन्ति इति स्वाभिप्रायो भारविणा नायकस्य मुखेन विशदं प्रकटितः—

**अवधयारिभिर्नीता हरिणै स्तुल्यवृत्तिताम्।**
**अन्योन्यस्यापि जिह्रीमः किं पुनः सहवासिनाम् ॥**
**शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।**
**जन्मिनो मानहीनस्य तृणस्य च समागतिः ॥ ११.५८,५९**

भारवेर्विचारणाया मानमेव परम धन जनस्य। मानवन्तो नरा एव केवल प्रशस्याः। मानवान् पुरुष एव पुरुषः—

**अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम्।**
**प्रियतां ज्यायसीं मागान्महतां केन तुङ्गता ॥**
**तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः।**
**पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ११.६०.६१**

जीवने सम्मानं यशश्च भारवेर्वरेण्यतमे। तन्मते जगति इदम्प्रथमतया गण्यमानो नर एव सफलजन्मा। यशस्विनैव वसुधा वसुधेत्यन्वर्थकीक्रियते—

**स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते।**
**नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥**
**गुरून् कुर्वन्ति ते वश्यानन्वर्था तैर्वसुन्धरा।**
**येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ ११.६२,६४**
**करोति योऽशेषजनातिरिक्तां सम्भावनामर्थवतीं क्रियाभि।**
**संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या ॥ ३.५१**

'दीनताया याञ्चायाश्च कविवरोऽसौ भृश जुगुप्सति । अत अर्जुन आह—

**शरासनं बिभ्रति सज्यसायकं**
**कृतानुकम्पः स कथं प्रतीयते** ।।१४.१६. इति ।

मनस्वी जनः परेभ्यो भूतिं नेच्छेत् । स्व तेजसैव असौ सम्पद-मवाप्नुयात्—

**मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्त्तयते स्वयं हतैः ।**
**लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यत.** ।।२.१८

अन्यच्च—

**किमपेक्ष्य फलं पयोधरान् ध्वनत प्रार्थयते मृगाधिपः** । २ २१

मनस्विना न कदापि स्वीया तेजस्विता परित्याज्या, परैर्न कदाप्यसावभिभूतो भवेत् । परैरपर्यासितवीर्यसम्पदो मानिन एव भारविदृष्टया ज्येष्ठाः वरिष्ठाश्च ( १.४१ ) । अतएव नरो हिरण्यरेता इव पौरुषप्रदीप्त. स्यात्, न भस्मना चय इवावहीन :—

**ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जन ।**
**अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः** ।। २.२०

भारविः जीवने श्रिय. साधना चिकीर्षति तस्य श्रीविषयका अवधारणा ससारे यत्किमपि वरेण्य शिव काम्य वास्ति तत्सर्वं क्रोडीकरोति । लोकैषणायामास्था अस्य कवेर्विद्यते भृश, किन्तु विषय-विलासव्यासगादसौ अतितरा जुगुप्सति । 'आपातरम्या विषया पर्यन्त-परितापिन'' (११.१२) इत्यादिक वचः पल्लवयता एतत् प्रतिपादितं तेन । भारवे· कृते सांसारिकसुखोपलब्धिर्वरेण्यो वरीवर्ति, किन्तु उत्तरदायित्वस्य कर्तव्यस्य वा निर्वाहाय जागरूकता न क्षणायापि असौ परिजिहीर्षति । अतो भारवि· जागरूकेणावहितेन च मनसा सम्मान-सम्पत्ति-सौन्दर्य-स्वामित्व-समवायभूतां विभूतिं श्रियं च समीहमान आस्ते । किन्तु जीवनस्य सार्थकता प्रति सर्वदा असौ जागरूकोऽस्ति । अत एवास्य काव्येऽर्थगौरवाय सर्वत्र जागरूकता

अवधान च स्त । कविवरेण्योऽसौ अवितथमेवाविहितकविरिति कथितः कुन्तकेन[1] ।

**साधन-सम्पत्**

उत्साहाय पौरुषाय च प्रबल आग्रहो दृश्यतेऽस्य कवेः । अस्मिन् लोक एव कर्मठतया नरेण प्रेयः प्राप्यमिति सिद्धान्तितमासीत् तेन । प्रबलेन पराक्रमेण प्रकर्षमधिगन्तुं प्रयत्नो जनेन विधेयः श्रिय समधिगन्तुम् । पराक्रमप्रकर्षः भारविकाव्यस्य मूलः स्वरः । तदीयजीवनदर्शनस्याधारभित्तिः पराक्रमे पौरुषे वा प्रतिष्ठिता आस्ते । महर्षिव्यासमुखात् कविराह—

**लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।**
**अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः ॥३.१७**[2]

आततायिनो वधाय शमप्रियेणापि मनुजेन शस्त्रमुपादेयम् । चापो हि नाम भारवेर्दृष्टौ प्रथमं पौरुषचिह्नम्[3], शत्रोर्निबर्हणं च सर्वोपरि कर्तव्यम् ।[4] भारवेः कृते सिद्धिसाधनार्थमत्यन्तं दुष्करं तपोऽपि न तथा महत्त्वमावहति यथा उद्दीप्तः पुरुषकारः । अत एव शम्भुर्यथार्जुनस्य प्रबलपराक्रमेण प्रसन्नतां गतः न तथा तस्य तपः प्रकर्षेण—

---

१. वक्रोक्तिजीविते, प्रथमोन्मेष , ७,
( सुशीलकुमार डे महोदयसम्पादितसंस्करणे, ५.६. )

२. पराक्रमस्याशसनं बहुशः पुनः पुनश्च कविवरेण विहितम् । यद्यथा—
अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्त्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥
विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥
तदल प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायबन्ध्यताम् ।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः ॥ २.१३-१५

३. इति तेन विचिन्त्य चापनामप्रथम पौरुषचिह्नमाललम्बे । १३.१४

४. परमं लाभमरातिभंगमाहु । १३.१२
किरा० १.६, २.३६-३६, ४१, ४३, १४.१

**तपसा न तथा मुदमस्य ययौ भगवान् यथा विपुलसत्त्वतया ।**
**गुणसंहतेः समतिरिक्तमहो निजमेव सत्त्वमुपकारि सताम् ॥१८ १४**

प्रबलपौरुषं बहुमन्यमानोऽपि भारविस्तस्य विवेकसंयतत्वमाशशंस । दुर्धर्षोद्धतः पौरुषः सर्वनाशमपि कर्तुं प्रभवति अनुचित प्रयुज्यमानः, अतो नीत्या नियन्त्रणं तस्य कार्यम् । पुरुषार्थस्य विनियोगोऽपरामर्शं सहसा न कार्यः, अपितु सविमर्शमेव ( १.३० ) । युधिष्ठिरेण भीमाय प्रदत्ते प्रत्युत्तरे नास्ति पौरुष-साहसयोरस्वीकृतिः, अपितु तेषां यथायथ विनियोगाय एव आग्रहो वरीवर्ति । प्रभविष्णु-पुरुषाणामपि धियो नयवर्त्मगा भवेयुरिति भारविर्वाञ्छति ( ६.३८ ) । अस्थाने प्रयुज्यमानः पुरुषार्थ. नैव भारविणा समर्थ्यते, अतस्तस्य समुचितोपयोगाय तितिक्षा-सयम-सहिष्णुता-विवेकादिगुणानामुपस्थितिमसावपेक्षते ।

**साधना**

भारविः साधनामयमेव जीवनमाशशस । 'यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसख्यामतिवर्त्तितुं वा' ये जनाः निरुत्सुका सन्तः अभियोगभाजो भवन्ति, तेषा 'समुत्सुकेवाङ्कमुपैति सिद्धिः' (३।४०) । साध्यप्राप्तये अविरता कर्मठतां भारविरभीप्सति । पौरुषप्रियस्य भारवेर्मतौ कार्मुकं हि नाम प्रथम पौरुषचिह्न ( १३।१४ ), किन्तु कार्मुकमपि तदेव यस्य कर्मसु शक्तिः स्यात् ( ३।४८ ) । अत एव कर्माराधनैकनिरतेन नरेण 'अशेषजनातिरिक्ता सम्भावना क्रियाभिर्रर्थवती करणीया' ( ३।५१ ), अप्रमादेनावहितमनसा च सर्वदैव इष्टार्थपरिपूर्तये कर्मणि वर्तितव्यम् (३।५३) । साधनानिरतो मनस्वा दुष्करेणापि तपसा अवसन्नः परिखिन्नो वा न कदापि भवति (१।१६) । सिद्ध्यर्थं दृढमभियुक्तस्यापि साधकस्य आचरणं निरुत्सुकतयैव अनासक्त्यैव वा विहित स्यात् । अर्जुनस्य साधना वर्णयता कविना पुनः पुनरेतत् प्रतिपादितम्—

**वपुरिन्द्रियोपतपनेषु सततमसुखेषु पाण्डवः ।**
**व्याप नगपतिरिव स्थिरतां महतां हि धैर्यमविभाव्यवैभवम् ॥**

**न पपात सन्निहितपक्तिसुरभिषु फलेषु मानसम् ।**
**तस्य शुचिनि शिशिरे च पयस्यामृतायते हि सुतपः सुकर्मणाम् ॥**

**न विसिस्मिये न विषसाद मुहुरलसतां न चाददे।**
**सत्त्वमुरुधृति रजस्तमसी न हृतः स्म तस्य हतशक्तिपेलवे ।१२-३.५**

अवधानेन अनासक्त्या च सह साधक. धैर्येण दृढनिश्चयेनापि च सवलित स्यात्। अर्जुन हि भारविरादर्शत्वेन वृणुते, यस्य मनसि—

**विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि।**
**आराध्य वा सहस्राक्षमयश शल्यमुद्धरे ॥११.७९**

इत्येतादृशः सुस्थिरो निश्चय परिस्फुरन्नास्ते। भारवेः साधना समन्वयमयी विद्यते। जीवने स धर्मार्थकामाना समन्वयमभिलषति। साधनया कर्मठतया च पुरुषार्थत्रयस्य समुपलब्धिर्जीवने करणीया इति भारवेरादर्शः। त्रयाणामपि पुरुषार्थाणा समपक्षपातया भक्त्या समाराधना कार्या येन परस्परमेते न बाधेरन्—

**असक्तमाराधयतो यथायथं विभज्य भक्त्या समपक्षपातया।**
**गुणानुरागादिव सख्यमीयिवान् न बाधतेऽस्य त्रिगण. परस्परम् ॥१.१।**

ननु कालिदासेनापि दिलीपस्य कृते रघुवशेऽलेखि—'अप्यर्थकामौ तस्यास्ता धर्म एव मनीषिण.' (१.२५) इति, तथापि उभयोः कवियवरयोर्दर्शने मूलभूत विभेद कमपि पश्यामः। कालिदासस्तु धर्मेणार्थकामयोस्तादात्म्यमूरीकरोति, किन्तु भारविः 'समपक्षपातया भक्त्या विभज्य' इति, 'न बाधते' इति च कथयन् स्पष्ट तेषु अन्तर पश्यति। कालिदासः 'धर्मादर्थश्च कामश्च स धर्मः कि न सेव्यत' इति व्यासपरम्परामनुहरति, भारविस्तु धर्मः अर्थकामौ न बाधेत, न वा तौ धर्म बाधेतामिति कथयन् अक्षुण्णां स्वकीयां सासारिकीमास्था परिचाययति। ससारस्य समग्रेण ऐश्वर्येण विभूत्या श्रिया च सह धर्मोपसनापि कार्येति तन्मतिः। सासारिकविषयाणां सेवनं कुर्वाणोऽपि नरस्तेषु निरुत्सुकः सन् सत्यं शिवं च समाराधयन्निति भारवेर्विचार., अयमेव चास्य दृष्टेर्विशेषः स खलु ऐहलौकिक्या आस्थाया. प्रकृष्ट-पौरुषस्य उद्गाता कविर्विद्यते, किन्तु कामेन सह असौ शिवसाधना सुतरा सयोजयति, प्रबलपौरुष सौन्दर्येण सम्बलयति, कर्मनिष्ठां

मगलभावनया विभूषयति च। अतएवार्जुनस्य वीर्येऽपि शान्ति, पौरुषेऽपि तितिक्षा, भयकरत्वेऽपि सौन्दर्य, शस्त्रपाणित्वेऽप्यार्ष-भावमसौ अवलोकयाञ्चकार—

मनसा जपैः प्रणतिभिः प्रयतः समुपेयिवानधिपतिं स दिव ।
सहजेतरौ जयशमौ दधती बिभराम्बभूव युगपन्महसी ।। ६.२२

धृतहेतिरप्यधृतजिह्ममतिश्चरितैर्मुनीनधरयन् शुचिभिः ।
रचयाञ्चकार विरजाः स मृगांकमिवेशते रमयितुं न गुणाः ।। ६ २४

स बिभर्ति भीषणभुजंगभुजः पृथु विद्विषां भयविधायि धनुः ।
अमलेन तस्य धृतसच्चरिताश्चरितेन चातिशयिता मुनयः ।। ६.३२

उरु सत्त्वमाह विपरिश्रमता परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसंगमने विभुतानुषङ्गि भयमेति जन ।।६.३५

तपसा कृशं वपुरुवाह स विजितजगत्त्रयोदयम् ।
त्रासजननमपि तत्त्वविदां किमिवास्ति यन्न सुकरं मनस्विभिः ।।१२.६

भारवि. तेजस्वितायाः प्रकर्षस्य पौरुषस्य पुरुषार्थस्य च कवि-र्विद्यते। 'ॐ तेजोसि तेजो मयि धेहि, वीर्योऽसिवीर्यं मयि धेहि' इति कथयद्वैदिकमन्त्रद्रष्टा इवासौ तेजसा तेज एव उपास्ते, पौरुषेण पौरुषमेवाराध्यति। तस्य साधनाया तपः तेजस्वितया, पौरुषःसौदर्येण जयः शमेन च पर्यायिता प्रयान्ति। अत एवार्जुनतपस.वर्णने भारवे-र्भूरिभावभरिता भारतीत्थ समुल्ललास—

ज्वलतोऽनलादनुनिशीथमधिकरुचिरम्भसां निधेः ।
धैर्यगुणमवजयन्विजयी ददृशे समुन्नततरः स शैलतः ।।१२.७

प्रविवेश गामिव कृशस्य नियमसवनाय गच्छतः ।
तस्य पदविनमितो हिमवान् गुरुतां नयन्ति हि गुणाः न संहतिः ।।१२.१०

परिकीर्णमुद्यतभुजस्य भुवनविवरे दुरासदम् ।
ज्योतिरुपरि शिरसो विततं जगृहे निजान्मुनि दिवौकसां पथः ।।१२ ११

तमुदीरितारुणजटांशुमधिगुणशरासनं जना ।
रुद्रमनुदितललाटदृशं ददृशुर्मिमन्थिषुमिवासुरी पुरी. ॥१२.१४

मरुतां पतिः स्विदहिमांशुरुत पृथुशिखः शिखी तपः ।
तप्तुमसुकरमुपक्रमते न जनोऽयमित्यवयवे स तापसैः ॥१२ १५

न ददाह भूरुहवनानि हरितनयधाम दूरगम् ।
न स्म नयति परिशोषमपः सुसहं बभूव न च सिद्धतापसैः ॥१२.१६

स धनुर्महेषुधि बिभर्ति कवचमसिमुत्तमं जटा ।
वल्कमजिनमिति चित्रमिदं मुनिताविरोधि न च नास्य राजते ॥ १२,२७

चलनेऽवनिश्चलति तस्य करणनियमे सदिङ्मुखम् ।
स्तम्भमनुभवति शान्तमरुद्ग्रहतारकागणयुतं नभस्तलम् ॥१२.२८



# नन्दिकेश्वरस्य नाट्यशास्त्रे योगदानम्

**डा० पारसनाथद्विवेदी**

लेखेऽस्मिन् 'नन्दिकेश्वरस्य नाटचशास्त्रे योगदानम्' इति विषयमवलम्ब्य किञ्चिद् विमृशामः। तत्र भारतवसुन्धरा कस्मिन्नुद्देशे कस्मिन् वत्सरे वाऽऽचार्यनन्दिकेश्वर प्रसूयात्मान सार्थक कृतवतीति विषये मौनमेवालम्बते सर्वथेतिवृत्तम्। डा० मदनमोहनघोषमहोदयानां मतमस्ति यदाचार्यवर्येणामुना स्वजनुषा सम्भवतो दक्षिणदेशः पूतीकृतः। अपरे चैन कैलासपर्वतवासिन पार्वतीपतेः भगवतो विश्वनाथस्यान्तेवासिन मन्वते।

एवमनुश्रूयते वैवस्वतमनोः त्रेतायुगस्यादौ **क्रीडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेदिति**विविधकार्यविश्रान्तिभरितैरिन्द्रादिभिस्त्रिदशै. सम्प्रार्थितेन करुणार्द्रचेतसा वेधसा 'ऋग्वेदात् पाठचम्, सामवेदात् गीतम्, यजुर्वेदादभिनयान्. अथर्ववेदाच्च रसान्'[1] संगृह्य नाटचशास्त्रमाविष्कृतमित्येषाऽऽख्यायिका भरतमुनीप्रणीते नाटचशास्त्रे समुपलभ्यते। तेन च लोकपितामहेन पितामहेन सर्वप्रथमं महर्षये नारदाय गीतं स्वातये वाद्य भरतमुनये च नाट्य शिक्षितम्। तेषु स्वातिनारदौ तस्य प्रथमशिष्यौ भारते सगीत विस्तारयामासतुः। भरतमुनिश्च तेभ्योऽधिगम्य नाटचविद्यां प्रथम 'अमृतमन्थनम्' नाम नाट्यं प्रायुङ्क्त। प्रयोगेऽस्मिन् तेन वेधसा स्वातिनारदौ वाद्यगीताभ्यां नियोजितौ, यतश्च सुष्ठुप्रयुक्ताभ्या गीतवाद्याभ्यां नाटचप्रयोगौ न विपद्यते।[2] तत्रामृतमन्थनस्य सफलतामालोच्य वेधसाऽऽदिष्टेना-

---

१. जग्राह पाठचमृग्वेदात्सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानथर्वणादपि ॥१.१६
( नाट्यशास्त्रम्, ओरियन्टल इन्स्टीट्यूट, बडौदा, १९३८ )

२. गीते प्रयत्न. प्रथम तु कार्यः शय्याहि नाटचस्य वदन्ति गीतम्।
गीते च वाद्ये च हि सुप्रयुक्ते नाट्यप्रयोगो न विपत्तिमेति ॥
( नाटचशास्त्रम्, बड़ौदा )

चार्यभरतेन त्रिपुरदाहस्याभिनयोऽदर्शि भगवते पार्वतीपतये। प्रयोगमिममवलोक्य भृश तुष्टेन शिवेनाभ्यधायि—'यन्मयाऽऽविष्कृतं नानाकरणैरंगहारैश्चान्वितं नृत्यं पूर्वरगे योजयतु भवानिति'। ततश्च भगवतादिष्टो तण्डुः पूर्वरंगशोभाभिवृद्धयेऽङ्गहारं प्रयुक्तवान्। तेन प्रयुक्तं नृत्यमिदं 'ताण्डव' नाम्ना च प्रथितम्। अस्मिन्नेवावसरे शिवानुरोधेन भगवती पार्वती ब्रह्मणः समक्षं लास्यमपि प्रादर्शयत्। एतेन ज्ञायते यदाचार्यनन्दिकेश्वरः भरतसमकालिको भगवतो विश्वनाथस्य शिवस्य मुख्यगणश्चासीत्।

अभिनयदर्पणानुसारं जगत्स्रष्टा भगवान् प्रजापतिः नाट्यवेदं निर्मायाभिनयार्थं भरताय प्रायच्छत्। स च भरतमुनिः नाट्य-नृत्त-नृत्यभेदैस्त्रिधा प्रकल्प्य तन्नाट्यवेदं गन्धर्वाप्सरोभिस्साद्धं शिवस्य पुरस्ताददर्शयत्। भरतमुनिना प्रयुक्ते तस्मिन्नभिनये उद्धतप्रयोगानालोक्य भगवान् शकरः स्वगणाग्रगण्या तण्डुना भरताय न्यदीदिशत्। प्रीत्या च पावत्या तस्मै लास्यमप्युपदिष्टम्। ततश्च भगवती पार्वती वाणासुरदुहितरमुषा लास्यमनुशासितवती। उषया च द्वारवतीगोप्य लास्ये दीक्षिताः। गोपिकाभिश्च सौराष्ट्रललनाः लास्ये परिनिष्ठापिताः। ताभिश्चानेकदेशयोषितश्च शिक्षिता अभूवन्। इत्थं नाट्यशास्त्रमिद समस्ते भूमण्डले प्रतिष्ठितम्।[1]

भावप्रकाशनकारस्य शारदातनयस्य मतमिदम्-यन्नाट्यवेदस्याविष्कर्त्ता भगवान् शकरोऽस्ति। भगवान् चतुरानन आब्रह्माण्डस्तम्बपर्यन्त सृष्टि विधाय विश्रान्तिसुखाधिगमाय जगद्रक्षक लोकनायक विष्णुमुपगत। तेन प्रभविष्णुना विष्णुना शंकरान्तिकं प्रहितः सः। तत्खेद परिज्ञाय भगवता शकरेण च स्वरचितस्य नाट्यवेदस्य शिक्षा नन्दिकेश्वराय प्रादायि।[2]

कविराजेन राजशेखरेण काव्यमीमांसायां काव्यविद्योत्पत्तिप्रसगे 'रसाधिकारिकं नन्दिकेश्वरः' इत्यभिहितम्।[3] तेन च ज्ञायते यदनेनाचार्यनन्दिकेश्वरेण सगीतविषयकग्रन्थोऽपि विरचितः।

---

१. अभिनयदर्पण.। २-६.

२. भावप्रकाशनम्, शारदातनय, बडौदा-सस्करणम्, पृष्ठः २८५.

३. काव्यमीमासा, राजशेखरः १.१.

सिंहभूपालमतानुसारं नन्दिकेश्वरस्य प्रथमा-कृति· 'नन्दिकेश्वरसंहिता' वर्तते, किन्तु ग्रन्थोऽयमधुनानुपलब्ध एवास्ति। केवलं समुद्धरणमात्रेण सत्तास्य वरीवर्ति। 'नन्दिकेश्वरसहिता' नाट्यपरो ग्रन्थः प्रतिभासते, यत्र चानुमीयते नाट्यशास्त्रस्य सम्वादाभिनयगीतवाद्यरसादिप्रमुखविषयाणा विवेचन भवेत्? एतदपि सम्भाव्यते यन्नन्दिकेश्वरसंहितायाः कश्चित् खण्डितांशो भवेत्प्राप्त·, यमाधारीकृत्याभिनयपरानध्यायान् सयोज्य 'अभिनयदर्पण·' संगीतपरानध्यायान् संयोज्य च 'भरतार्णव·' सम्पादितो भवेत्। शेषश्च विषयः कालकलया विनाशमुपगत·। यतो ग्रन्थद्वयमदः परस्परं पूरकतया प्रतिभासते। 'भरतार्णवे' प्रारम्भिकाध्यायचतुष्टयमभिनयपरमवशिष्टश्च सगीतपर विद्यते। प्रारम्भिकाध्यायचतुष्टये तु हस्ताभिनयस्य विवेचन विद्यते। ग्रन्थारम्भश्च हस्ताभिनयेनैव भवत्यतो ज्ञायते यद्ग्रन्थस्य पूर्वभागे केचिदपरे विषया आसन् विद्यमाना, ये केनापि कारणेन विनष्टा उपलब्धाशांश्च प्रकाशिता·। एतद्धि 'अभिनयदर्पणो भरतार्णवश्चेति' ग्रन्थद्वय नन्दिकेश्वरनाम्ना प्रकाशित दरीदृश्यते। तत्राभिनयदर्पण डा० मदनमोहनघोषद्वारा सम्पादितो वर्तते। भरतार्णवश्च १९५७ ईस्व्या 'सरस्वतीमहल पुस्तकालय, तञ्जोर' प्रदेशे प्रकाशितो वर्तते।

तामिलभाषाया 'पंचभरतम्' नाम्नी रचनैकोपलभ्यते। एषा नारदेन सम्बन्धिता प्रतिपाद्यते। सम्भवतो नारदेन ग्रन्थेऽस्मिन् सगीतस्य पंचप्रकाराणामुपरि विचारो विहितो भवेत्, यश्च नर्तनेन नाट्येन वा सम्बन्धः सम्भवेदतएवास्याभिधानं 'पचभरतमि'ति वर्तते। यतश्चादिभरतं मार्तविगभरतमर्जुनभरत हनुमद्भरतं नन्दिभरतमिति भरतसंबद्धानि पचनामानि श्रूयन्ते। एषु 'आदिभरतम्' एकः संग्रहग्रन्थो विद्यते, यत्र नाट्यस्य नृत्यस्य च सिद्धान्ताः प्रतिपादिताः। अस्मिन् ग्रन्थे पंचस्कन्धा द्वात्रिंशदध्याया द्विशतोत्तरैकविंशतिसख्यकानि प्रकरणानि षट्सहस्रसख्याका· श्लोकाश्चासन्। शारदातनयस्यानुसारमस्य रचनादिभरतेन वृद्धभरतेन वा कृता।

'मार्तविगभरतम्' पश्चाद्भूवा लक्ष्मणाचार्यस्य कृतिरस्ति। 'अर्जुनभरतम्' अर्जुनाचार्यविरचितं प्राचीनं पुस्तकं वर्तते यस्मिन् तालहस्तो विशेषतः विचारितो। 'हनुमद्भरतम्' नामको गन्थः 'सरस्वतीमहल'

नामके ग्रन्थालये सूच्यां क्रमांके प्रथमतश्चतुर्थे प्राप्यते यस्मिन् सगीत-नृत्यविषये विचारो विहितः। संगीतविषयकग्रन्थेषु हनुमन्मतस्योद्धरणानि समुपलभ्यन्ते। 'नन्दिभरतः' सगीतस्याचार्य आसीत्, येन संगीत-विषयमधिकृत्य पुस्तकं लिखितम्।

नाट्यशास्त्रे काव्यमालासंस्करणान्ते लिखितमिदम्—'**समाप्तश्चायं नन्दिभरतसंगीतपुस्तकम्**'। एतेन ज्ञायते यदासीत्कश्चिन्नन्दिभरत-नामाचार्य', येन सगीतविषयक पुस्तकमलेखि। कोऽसौ नन्दिभरत.? किमयमेक उत वा द्वौ पुरुषौ? किमेकस्य द्वयोर्वाभिधानमिदमिति विचारणीय वर्तते। श्रीमदविभनवगुप्तपादाचार्यः नन्दिनं भरतं च पृथक् पृथक् व्यक्तिद्वयं मनुते तथा तयोरपर नाम तण्डुः मुनिश्चाभिधत्ते (**तण्डुमुनिशब्दौ नन्दिभरतयोरपरनामनी**)।[1] महाकविना रामकृष्ण-कविनापि समर्थित मतमिदम्-यन्नन्दिकेश्वरस्तण्डुश्चैक एवासीत्। अनेनैव च 'नन्दिकेश्वरसहिता' नामको ग्रन्थो व्यलेखि, किन्तु ग्रन्थ-स्यास्य बहुभागो विनष्टोऽवशिष्टश्चाश एव वर्तमानोऽभिनयदर्पणो वर्तते।[2]

एव हि श्रूयते यदेकदा शुक्राचार्यादुपात्तविद्यैरसुरैर्देवेभ्यो नृत्ये प्रतियोगिताया सस्पर्ध निमन्त्रणमदायि। अतो देवराजेन नन्दिकेश्वरो भरतार्णवस्य चतुः सहस्रश्लोककलेवरस्य रचनायै प्रार्थितः। नन्दि-केश्वरेण चासुराणा सा प्रतियोगिता स्वीकृता। सुरेन्द्रेण सुमतये भरतार्णवे शिक्षावाप्तये निर्देशो दत्तः। ततः नन्दिकेश्वरेण सुमतये भरतार्णवस्य शिक्षा प्रादायि। अतएव भरतार्णवः 'सुमतिबोधक' पदेनापि व्यपदेशमश्नुते।[3]

एव चाचार्यनन्दिकेश्वरस्याभिनयदर्पणो भरतार्णवश्चेति रचनाद्वयी संराजते संस्कृतनाटयक्षेत्रे। तथा चाभिनयविद्याया उन्मेषकर्त्राऽऽचार्यनन्दिकेश्वरेणाभिनयदर्पणनामके ग्रन्थे चतुर्वर्गफलप्राप्त्युपायभूतं

---

१. अभिनवभारती, बडौदा-सस्करण, पृष्ठ, ७८.

२. दि क्वार्टरली जर्नल आफ दि आध्र हिस्टारिकल रिसर्च सोसाइटी, भाग ३, पृष्ठ २१–२६.

३, इतिनन्दिकेश्वरविरचिते भरतार्णवे सुमतिबाधके चारीद्वयप्रकरणं नाम अष्टमाध्याय (भरतार्णव, पृष्ठ २८८)।

सुखसौभाग्यकरं ब्रह्मानन्दतोऽप्यधिकानन्दप्रदायकं व्युत्पत्तिशास्त्रविबोधाधायकं नाट्यशस्त्रमिति मत्वा नाट्यशास्त्रस्याभिनयदृष्ट्या नाट्य-नृत्त-नृत्यरूपेण भेदत्रयं प्रकल्प्य तस्य प्रयोगकालोऽपि निर्दिष्टः। तत्र नाट्यनृत्ययोः प्रयोगो विशेषतः पर्वकाले नृत्तप्रयोगश्चाभिषेकादिमहोत्सवेषु कार्यः। नन्दिकेश्वरमतानुसारेण पूर्वकथासंयुतोऽभिनयः नाट्यम्, भावाभिनयहीनं नाट्यं नृत्तम्, रसभावव्यञ्जनादियुतं नाट्यं नृत्यमुच्यते।[1]

**अभिनयनिरूपणम्**

कोऽसावभिनय इति प्रश्ने अभिनयशब्दस्य व्युत्पत्तिं विधास्यता नाट्यशास्त्रे लिखितमाचार्यभरतेन अभीत्युपसर्गपूर्वकप्रापणार्थकात् णीञ् धातोरच्प्रत्यये कृतेऽभिनयशब्दो निष्पद्यते।[2]

कविराजेन विश्वनाथेन **'भवेदभिनयोऽवस्थानुकारः'** इत्यभिनयलक्षणमुक्तम्। एवं चाभिनये बाह्यप्रसाधनापेक्षया वस्तुनोऽन्तर्भावानभिव्यञ्जयितुमधिकं महत्त्वं वर्तते। मनःशरीरयोरेकाग्रतया चान्तर्भावाभिव्यञ्जनं सम्भाव्यते। उक्तञ्चाचार्यनन्दिकेश्वरेण यदभिनयप्रयोगे यस्या दिशि हस्तसंचालनं कुर्यात्तत्रैव दृष्टिं निक्षिपेत्, यत्र दृष्टिं निक्षिपेत्तत्रैव मनो निवेशयेत्, यत्र मनस्तदनुसारं भावानभिव्यञ्जयेत्, भावानुरूपं रसान् सृजेत्। यथा चोक्तम्—

**यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः।**
**यतो मनस्ततो भावो यतो भावस्ततो रसः॥**[3]

एवं च नृत्यगीताभिनयादिषु नाट्याङ्गेष्वभिनयस्य प्राधान्यमुपलभ्यते। तत्राभिनयस्य चातुर्विध्यमुक्तमभिनयदर्पणे—

**आङ्गिको वाचिकस्तद्वदाहार्यः सात्त्विकोऽपरः।**

तत्राङ्गैर्निदर्शितः आङ्गिकोऽभिनयः, वाचा विरचितो वाचिकाभिनयः, सात्त्विकैर्भावैरभिभावितः सात्त्विकाभिनयः, हारकेयूरादिभिरलंकृतः

१. अभिनयदर्पणः, श्लोकः ११–१६.
२. अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये।
यस्मात् प्रयोगं नयति तस्मादभिनयः स्मृतः॥ (नाट्यशास्त्रम्, ८।१)
३. अभिनयदर्पणः, श्लोकः ३७.

आहार्याभिनयश्चोच्यते।[1] अभिनयस्येमे चत्वार: प्रकारा भगवतो नटराजस्य शिवस्य चत्वारि रूपाणि सन्ति। उक्तं चाभिनयदर्पणे मंगलश्लोके 'समस्तेयं सृष्टि: यस्याङ्गिकोऽभिनय:, समस्तं वाङ्मयं यस्य वाचिकोऽभिनय:, चन्द्रतारादिमण्डितं नभ: यस्याहार्याभिनय:; स्वयं च य: सात्विकाभिनयरूपेण सराजते, त नटराज शिवं नमस्कुर्म:'। यथा—

**आङ्गिकं भुवनं यस्य वाचिकं सर्ववाङ्मयम्।**
**आहार्यं चन्द्रतारादि तं नुम: सात्त्विकं शिवम्॥**[2]

एषु चतुर्विधाभिनयेषु प्राधान्यत: आङ्गिकाभिनयस्य विवेचनं दृश्यतेऽभिनयदर्पणे। स चांग-प्रत्यगोपाङ्गै: प्रदर्शितोऽभिनय आङ्गिकाभिनय उच्यते। अभिनयदर्पणे नाटचशास्त्रे च शिरो हस्तौ वक्ष: पाश्वौं कटीतटौ पादौ वेति षडङ्गानि निरूपिनानि सन्ति। केचित्तु ग्रीवा सप्तममङ्गं निरूपयन्ति। स्कन्धौ बाहू पृष्ठमुदरमूरुजंघे षडिमानि प्रत्यङ्गानि निर्दिष्टानि, अपरे नाटचाचार्या: मणिबन्धकौ जानुनी कूर्परौ ग्रीवा चेत्यतिरिक्तानि प्रत्यङ्गानि निरूपयन्ति। अभिनयदर्पणे दृष्टिभ्रूपुत्तलिका कपोलौ नासिका जानुनी दन्ताधरजिह्वा चिबुकं मुख मस्तकाङ्गानि चेत्युपाङ्गानि निर्दिष्टानि। एतदतिरिक्तानि पाश्वौं गुल्फौ करपादाना तलानि, अगुल्यश्चाप्युपाङ्गानि निर्दिष्टान्यभिनयदर्पणे। नाटचशास्त्रे चाचार्यभरतेन शिर: हस्तौ ऊरू पाश्वौं कटितटौ पादौ चेति षडुपाङ्गानि निरूपितानि। यद्यपि भेदोपभेदैरनेकाविधानि सन्त्यङ्गप्रत्यङ्गोपाङ्गानि, किन्त्वत्राभिनयदर्पणे नृत्यमात्रोपयुक्तान्येवाङ्गप्रत्यङ्गोपाङ्गानि विवेचितानि सन्ति। वस्तुतो हस्तपादा एवाभिनयस्य मुख्यानि साधनानि सन्ति। अतएवाभिनयदर्पणे विशेषेणाभिहिताश्च हस्तपादाभिनया इति।

भरतार्णवो नन्दिकेश्वरस्यापूर्णा कृति: प्रतिभासतेऽभिनयदर्पणस्य पूरकश्चोच्यते। तत्र सन्ति पञ्चदशाध्याया:। यत्र नाटचस्य विशेषत: संगीतस्य भूयानंशो विवेचितो वर्तते। भरतार्णवस्यादावध्यायचतुष्टये हस्तपाददृष्टिभेदानां प्रतिपादनं विद्यतेऽनन्तरं च स्थानक-ताल-चारी अंगहार-सप्तलास्यादीनां निरूपणं वर्तते।

१. तत्रैव, श्लोक: ३९,४०.
२. „ श्लोक; १.

**हस्ताभिनयः**

सर्वैरेव नाट्याचार्यै. हस्ताभिनयस्य भेदद्वय प्रतिपादितमसयुतहस्तासयुतहस्ताश्च। तत्रैकेन हस्तेन प्रयुक्तोऽभिनयोऽसयुक्तहस्ताभिनय., द्वाभ्या हस्ताभ्या प्रयुक्तोऽभिनय. संयुतहस्ताभिनयश्चोच्यते। तत्रासयुतहस्तस्य सप्तविशतिभेदा. निरूपिता भरतार्णवेऽभिनयदर्पणे तु तस्याष्टाविशतिभेदाः परिगणिता.। भरतार्णवे निरूपिताः सप्तविंशतिभेदास्तु तथैव विवेचिता अभिनयदर्पणे,- किन्तु 'त्रिशूल-नामैकोऽतिरिक्तभेदोऽपि वर्तते तत्र। नाट्यशास्त्रे त्वसयुतहस्तस्य चतुर्विशतिभेदा. निरूपिताः सन्ति। संयुतहस्तस्य तु षोडशभेदाः निरूपितास्तत्र भरतार्णवेऽभिनयदर्पणे तु त्रयोविशतिभेदास्तथा नाट्यशास्त्रे त्रयोदशभेदाश्चोक्ताः सयुतहस्ताभिनयस्य।

भरतार्णवे नृत्तहस्ताना सूच्यान्तु षोडशप्रकारका नृत्तहस्ता उल्लिखिता., किन्तु ग्रन्थमध्ये द्वाविशतिप्रकारा नृत्तहस्ताः सन्ति विवेचिता.।[1] 'सरस्वतीमहल' नामके पुस्तकालये विद्यमाने हस्तलेखे षोडशनृत्तहस्तातिरिक्ता. षडन्ये नृत्तहस्ताः वर्णिताः सन्ति। एव पाण्डुलिपिनिर्दिष्टाना षण्णा नृत्तहस्ताना संयोजनेन द्वाविशतिविधा जायन्ते नृत्तहस्ता.। अभिनयदर्पणे त्रयोदशविधा नृत्तहस्ताः नृत्तहस्ताना पचधा गतयश्च सन्ति निर्दिष्टा.। नाट्यशास्त्रे तु त्रिशद्विधा नृत्तहस्ता. सन्ति निरूपिता., भरतार्णवे नृत्तहस्तेषु केचिद्धस्ता. सयुतहस्तैस्सह योजिताः, नाट्यशास्त्रे च ते नृत्तहस्तेषु सम्मिलितीकृताः। अतो भरतार्णवे नृत्तहस्ताना सख्या न्यूना नाट्यशास्त्रे चाधिका वर्तते। एतदतिरिक्त भरतार्णवे बृहस्पतिमतेनापि हस्ताभिनयस्य सप्तविंशतिभेदाः निरूपिताः सन्ति।

**पादाभिनयः**

आचार्यनन्दिकेश्वरेण हस्ताभिनयस्येव पादाभिनयस्यापि महत्त्वमङ्गीकृतम्। भरतार्णवे चतुस्त्रिशत्पादाः सन्ति निर्दिष्टाः।[2] अभिनयदर्पणे तु मण्डलमुत्प्लवन भ्रमरी पादचारिका चेति चतुर्धा पादभेदा.

१. भरतार्णवः, अध्यायः ३.

२. भरतार्णवः, अध्यायः ४, श्लोकः २८८-२८९, ३०१-३०४, ३३०.

निरूपिता। नाटचशास्त्रेऽपि एत एव पादभेदा. सन्ति वर्णिताः। किन्त्वेते भेदोपभेदैरनेकविधा भवन्ति।

एव च नन्दिकेश्वरमतेन चतुर्दशधा मतान्तरेण च पचधा एवं-चैकोनविशतिविधा· शिरोभेदाः निरूपिता. भरतार्णवे। ततश्च षट्त्रिंशत् दृष्टिभेदाश्चापि विवेचिताः सन्ति।

**नृत्यविवेचनम्**

भारतीयनाट्यपरम्परायां सगीतस्य महत्त्वपूर्णा भूमिका वर्तते। संगीतमभिनयस्य जीवनाधायक तत्त्वमस्ति। अतएवाचार्यनन्दि-केश्वरेण नाट्येन सह सगीतमपि विचारितम्। सगीतस्य तु महत्त्व सर्वैरेवाचार्यैः स्वीकृतम्। न केवलं भारतीया एव, अपितु पाश्चात्त्य-विद्वांसोऽपि सगीतस्य महत्त्व स्वीकुर्वन्ति। भारतीयपरम्परा सगीत-स्यान्तर्गत गीतस्य वाद्यस्य नृत्यस्य च प्रयोगं समर्थयति। यथा—

**गीतं वाद्यं च नृत्यं च त्रयं संगीतमुच्यते।**[1]

सगीतस्य प्रमुखतत्त्वं नृत्यमस्ति। नृत्य विना सगीतस्यापूर्णतैव मन्यते। नृत्येन सह प्रयुज्यमानं गीत वाद्यं च समधिक मनो रञ्जयति। नाट्यशास्त्रानुसारं नाट्ये नृत्यस्य प्रयोगो भगवत. शकरस्य प्रेरणया सजातः। भरतेन प्रयुक्तस्य 'त्रिपुरदाह'—नाम्नो डिमस्य पूर्वरङ्गो नृत्येन हीनत्वात् 'शुद्ध' एवासीत्। भगवता शंकरेण तद्गीत-वाद्य-युतस्य नृत्यस्य प्रयोगेण समलकृत्य 'चित्र' रूपेण प्रस्तुतीकरणाय समाज्ञप्तः 'तण्डुः', यत् स भरताय नृत्यं शिक्षयतु।[2] तण्डुना प्रयुक्तं तन्नृत्य 'ताण्डव' नाम्ना प्रथितम्। ताण्डवनृत्य नानाप्रकारै. करणै-रङ्गहारैश्च युक्त भवति। अङ्गहारः करण रेचकमिति सन्ति नृत्य-सम्बन्धीनि तत्त्वानि। नृत्ये ताल-लय-गीत-वाद्यानामपि सन्निवेश औचित्येन राजते।

**करणनिरूपणम्**

नाटचशास्त्रे प्रतिपादित यत्समस्तानामेवाङ्गहाराणा. निष्पत्तिः करणादेव जायतेऽतोऽङ्गहारविवेचनात्प्रागेव करणविवेचनमावश्यक-

१. संगीतरत्नाकर., प्रथमाध्यायः, स्वरगताध्याय, श्लोक. २१.

२. नाट्यशास्त्रम् ४।१२-१८ ( बड़ौदा-संस्करणम् )।

मिति।[1] भरतार्णवेऽङ्गहारान्तर्गत करणविवेचनमपि कृतम्। नृत्ये हस्तपादादीना गतय 'करण' व्यपदेश लभन्ते।[2] प्रतिकरणे हस्त-पादाना मुद्रारचना जायते। नाट्यशास्त्रेऽष्टोत्तरशतप्रकारकाणा करणानामुल्लेखो वर्तते। स्थानकम्-चारी-नृत्तहस्तादीनि सन्ति करणाना विभिन्नानि तत्त्वानि। भरतार्णवे विस्तृततया विचारितानि तत्त्वानीमानि।

**स्थानकम्**

विद्यते 'स्थानक' करणानामेक तत्त्वम्। नृत्ये स्थितेर्मुद्रा स्थानक-मुच्यते। हस्तपादाना स्थितय. करणमुच्यते। स्थितेर्मुद्रापि विद्यत एकविधा पादस्थितिरेव। अतएवोच्यते स्थानक करणस्य तत्त्वमिति। भरतार्णवे द्वात्रिंशद्विधानि स्थानकानि प्रतिपादितानि।[3] यत्र च स्थितेर्विभिन्नाना मुद्राणा स्वरूपाणि मुद्राश्च विस्तृतया विवेचिताः। अत्र सप्त पुरुषजातीया. सप्त स्त्रीजातीया· अष्टादश च मिश्रजातीयाः सन्ति। नाट्यशास्त्रे षण्णा पुरुषजातीना तिसृणाच स्त्रीजातीनां समुल्लेखो वर्तते, नात्र मिश्रितजातयो वर्णिताः। भरतार्णवे' नृत्य-वर्णनाय यासा स्थितीना वर्णन विद्यते तासा प्रतिपादन नवमाध्याये विराजते। नृत्यार्थमतीवावश्यका इमाः। आसु या 'सप्तमास्थितिः' विद्यते तस्या वास्तविकाभिधानपरिज्ञाने काठिन्य प्रतीयते यतः केषुचित् स्थलेषु 'चान्द्रिक' इत्यभिधयापरत्र च 'चाण्डिक' इत्यभिधया च वर्णितैषा। सप्तस्थितीना मूललेखकरूपेण सप्तदेव्यो मातरो वा परिगणिता·, यासा नामानीमानि प्रसिद्धानि-'ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी-वाराही-इन्द्राणी-चामुण्डा चेति। अतएव सिद्ध्यतीद यच्चाण्डिकमिति नामैव समुपयुक्त न तु चान्द्रिकमिति।

**चारीनिरूपणम्**

'चारी' इत्यपि विद्यते करणानामेवैकं तत्त्वमिति। नृत्ये चास्य सविशेष महत्त्वमगीकृतम्। भरतेन नाट्य-नृत्ययोरुभयोरपि कृते निरूपित चार्या. महत्त्वम्। नाट्यशास्त्रे कटिभ्यामुरूभ्या जंघाभ्या

---

१. सर्वेषामगहाराणा निष्पत्ति. करणैर्यत.। ( नाट्यशास्त्रम् ४।२९ )

२. हस्तपादसमायोगो नृत्यस्य करणं भवेत्। ( नाट्यशास्त्रम् ४।३० )

३. भरतार्णव. ५।३३३-३३८.

पादाभ्याञ्च विहितस्याभिनयस्य समानीकरण 'चारी'-ति नाम्ना व्यपदिष्टम् ।[1] भरतार्णवे नन्दिकेश्वरेण पादैकेन क्रियमाणस्याभिनयस्य चारीति व्यपदेश. कृत ।[2] चारीद्वारैवाङ्गहारणा करणाना च रचना जायते । भरतनाट्यशास्त्रानुसारमेकपादेन क्रियमाण पाद-प्रचार 'चारी'-ति व्यपदिश्यते । पादद्वयक्रियमाणा च चेष्टा करणमिति निर्दिश्यते । करणानां समायोगेन 'खण्डस्य', त्रयाणा चतुर्णां वा खण्डानां योगेन 'मण्डलस्य' च परिकल्पना क्रियते ।[3] भरतार्णवे चाकाशचारी भूचारी चेति रीत्या वर्गद्वये विभागो विहितश्चार्याः। नाट्यशास्त्रे चाकाशचार्या. षोडशभेदा भूचार्याश्चापि षोडशभेदास्सकलनेन द्वित्रिंशभेदा निरूपिताश्चार्या । अभिनयदर्पणे तु केवलमष्टावेव चार्यो निर्दिष्टा., न तत्राकाशचारी भूचारीति विभागो दृश्यते । भारतार्णवे चाकाशचारी भूचारीति भेदद्वय प्रकल्पितम् । तत्राकाशचार्याः नवधा भूचार्याश्च षोडशभेदा निरूपिता. । आकाशचार्यामाकाशमभिलक्ष्य भूचार्याश्च भुवमभिलक्ष्य प्रयोगो विधीयते । एतदतिरिक्त भरतार्णवे चारीयुक्तस्य हस्तस्यापि निरूपण कृतम् । भरतार्णवस्यानुसार नृत्ये हस्तप्रचारस्य पादप्रचारस्य चोभयोरपि प्रयोगो विधीयते। अनयोः कदापि हस्तप्रचारस्य कदाचन पादप्रचारस्य प्राधान्यं भवति ।

नृत्तहस्ता अपि करणाना महत्त्वपूर्णानि तत्त्वानि सन्ति । करणेष्वेव नृत्तहस्ताना प्रयोगो विधीयते । नृत्तहस्ताना मुद्राणा परिज्ञानाय करणज्ञानमत्यावश्यकम् ।

---

१. एव पादस्य जंघाया उरोः कटयास्तथैव च ।
समानकरणे चेष्टा चारीति परिकीर्त्तिता' ॥
( नाटयशास्त्रम् , बडौदा-सस्करणम् १०.१ )

२. यत्केवलेन पादेन नृत सा चार्युदाहृता । ( भरतार्णवः ८.५२१ )

३. एकपादप्रचारो य' सा चारीत्यभिसञ्ज्ञिता ।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥
करणानां समायोगः खण्ड इत्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा सयुक्तैर्मण्डलं भवेत् ॥
( नाट्यशास्त्रम् , बड़ौदा-सस्करण १०.३-४ )

**रेचकः**

'रेचक ' नृत्यस्य प्रमुखतत्त्वता विभर्त्ति। रेचकोऽङ्गस्य सम्बन्धिता चेष्टा वर्तते। असौ करणेभ्यश्चारीभ्यश्च पार्थक्य वहति। रेचकस्य क्षेपणम्, पृथक्करणम्, नम्रीभवन वा विद्यतेऽर्थः। हस्त-पाद-कटि-ग्रीवाणा विभिन्नमुद्रासु सचालन रेचकपदवाच्यमस्ति। नाट्यशास्त्रे पादरेचक कररेचक कटिरेचक कण्ठरेकश्चेति चत्वारो प्रकारा निरूपिता.।[1]

**तालविवेचनम्**

'ताल' शब्द 'तल्' धातोर्निष्पद्यते, यस्यार्थो 'हस्ततल' इति वर्तते। भरतकोशे लिखितमस्ति यत् 'ता' इति शिवस्य 'ल' इति शक्तेश्च प्रतीकता विभर्त्ति। एव शिवशक्तिसमायोगेन च तालस्योत्पत्ति-र्भवति।[2] 'ताल' शब्दोऽय गीत वाद्यं नृत्यमिति सगीतस्य तिसृणामपि विद्याना कृते लयात्मिकामाकृति वितनुते। भरतार्णवानुसार द्रुत-लघु-गुरु-प्लुत-काकपद (हसपद)-विरामा इति षडगानि तालस्य प्रोक्तानि। एषु द्रुतस्यार्धमात्रा भवति। शास्त्रेऽस्याभिव्यक्तिर्व्योमव्यजन-विन्दुक-तारक-नयनवृत्तेर्जायते। लघोरेका मात्रा विद्यते। सरल-ह्रस्व-व्यापक-इषु-दारितानि सन्त्यस्य नामधेयान्यपराणि, गुरोर्मात्राद्वय भवति। अस्यापरं नाम वक्रश्चन्द्रजन्मा च वर्तते। प्लुते सन्ति तिस्रो मात्रा.। अस्यापर नाम सामोद्भवः त्र्यक. दीप्त इत्यपि वर्तते। हंसपदे भवन्ति चतस्रो मात्रा.। इद निःशब्दमप्यभिधीयते। विरामो यति-चरणांघ्रि-पद-त्रुटि-बन्धशब्दैरपि ज्ञायते।[3] तालेषु यते. प्रयोगो द्युतस्य लघोश्चानन्तर भवति। एष द्रुतलध्वोरग्रिमसोपानमभिधीयते। यतेः प्रयोगो तालस्य साधु समाधनाय भवति। द्रुतस्य लघोश्चार्द्ध-भागो यतिरिति निगद्यते।[4] अर्धद्रुतमर्धलघुरप्युच्यत एष। केचिद्विद्वासो

---

१ पादरेचक एक स्याद् द्वितीय कटिरेचक ।
कररेचकस्तृतीयस्तु चतुर्थ कण्ठरेचकः ॥
( नाट्यशास्त्रम्, बड़ौदा-सस्करणम्, ४.२४८ )

२. शिवशक्तिसमायोगात्तालानामभिधीयते। ( भरतकोष, पृष्ठ ८ )

३ भरतार्णव ७.४३०-४३४.

४. लघुद्रुतयोश्चापि विराम. परियुज्यते। ( भरतार्णव ५.४३६ )

द्रुतस्यानन्तर लघोर्वानन्तर प्रयुज्यमानमिममर्धद्रुतमेव वदन्ति। भरतार्णवेऽष्टोत्तरशतताला निरूपिता । नाट्यशास्त्रे तु नाष्टशत-ताला: प्रोक्तास्तत्र गीतै वाद्यैश्च सम्बद्धास्ताला । भरतार्णवे चेमे ताण्डवेन लास्येन च सम्बद्धा । नृत्ये सगीतापेक्षया तालस्या-वश्यकता सविशेषा वर्तते ।

**अंगहारविवेचनम्**

आचार्यनन्दिकेश्वरेण भरतार्णवेऽङ्गहारा सविस्तर वर्णिता । प्रयोगविधिश्चैषा नन्दिकेश्वराय ( ताण्डवे ) शिवेन निर्दिष्टः। नन्दि-केश्वरश्च भरतानशिक्षयत् । भरतार्णवेऽङ्गहाराणा निष्पत्तिरित्थ वर्णिता—

**आश्चर्यशब्दवचनैस्तत्तत्तालयोद्यतेः ।**
**करणानां मेलनं स्यादंगहारनृतिक्रमः ॥**[१]

भरतार्णवेऽन्यमतेनापि निगदितागहाराणा निष्पत्ति । तत्र केचन विचक्षणा· प्रात.कालीनकार्यक्रमे क्रियमाण नृत्यमगहार निरूपयन्ति ।[२] अपरे च विज्ञा अभिनयैकभागसमाप्तौ हाव-भावादियुताभि-र्मुद्राभि. क्रियमाणं नृत्यमङ्गहार वदन्ति ।[३] भरतार्णवे नव-धाङ्गहारा विवेचिता. । प्रत्येकस्याङ्गहारस्य सम्बन्धो रसेन योजित., सौन्दर्यशास्त्रेणापि सम्बद्धा निरूपिता इमे । तालाना गतिविशेष-वशादङ्गहारा द्वेधा विभजितु शक्यन्ते । त्रयो वा भवन्तु पादप्रचा-रास्तत्र चत्वारो वा । प्रतिवर्गे षोडशागहारा भवन्ति । एवं सक-लनेन द्वात्रिंशद्विधा अगहारा भवन्ति । भरतार्णवे तु ये नवागहारा: प्रदर्शितास्ते रसपरत्वाद्रससख्यानुगततया प्रतीयन्ते । वस्तुत इमे विशेषा अपि भवितु शक्यन्ते । प्रत्यङ्गहारे करणसख्या निर्धारिता,

१ भरतार्णव. ६।५७६.

२ वदन्ति केचिद्विबुधा भरतार्णवविचक्षणा ।
प्रातर्नृत्तप्रकटनैरगहारो विधीयते ॥
( भरतार्णव ६।५८० )

३. एव वदन्ति च परे तयोरुत्पत्तिरिष्यते ।
अर्थाभिनयमार्गेण सम्भूतो यो नृतिक्रम ॥
( भरतार्णव: ६।५८१ )

ष्टोत्तरशतकरणानाच प्रतिपादन दृश्यते। प्रतिकरणेषु स्थितीनां मिश्रण हस्तपादानां सचालन शिरश्चालनं सोद्देश्य दृष्टिपातनञ्च सयुज्यते। नृत्याभ्यासे करणानामावश्यकताऽनिवार्या वर्तते। एषा क्रियान्वितिदर्शन मूर्तिकलासु जायते। आसु चिदम्बरे तजौर-प्रदेशे च विद्यमानाना मन्दिराणा कला प्रसिद्धा।[1] एवमिद कथयितुं शक्यते यन्नाट्यशास्त्रे ग्रन्थान्तरेषु च निर्दिष्टा। द्वात्रिंशदगहारा भगवता शिवेन भरतार्णवे प्रोक्ताश्चागहारा भगवत्या च प्रदत्ताः सन्ति। किन्तु केचिद्विद्वासः भरतार्णवे वर्णितानगहारानपि शिवेनैव दत्तान् मन्यन्ते। वस्तुतो भरतार्णवे वर्णिता अगहारा रसपराः सन्ति। नाट्ये निरूपितान् नवरसानभिलक्ष्येमे नवागहारा विवेचिता नृत्यरूपता चैषा मानिता। नाट्यशास्त्रे च वर्णनमेषा केनाप्यन्येनोद्देश्येन कृतं प्रतिभाति।

**सप्तलास्यनिरूपणम्**

नाट्यशास्त्रे ताण्डवलास्यभेदेन द्विधा नृत्यनिरूपण कृतम्। ताण्डव शिवेन लास्यञ्च पार्वत्या सह सम्बद्धम्। ताण्डवलास्ययोरुद्भाव-नाया शिवपार्वत्योर्द्वयोरेव योगदानमभूत्। भरतेन लास्यस्य दश-धोल्लेखो व्यधायि।[2] भरतार्णवे नृत्यरूपाणा सप्तसमूहरूपाणा या वर्णना विहिता सा सप्तलास्यपदवाच्या विद्यते। एतेषा सख्या. सप्त निर्दिष्टा.—शुद्ध-देशी-पेरूणी-प्रेखणी-कुण्डली-दण्डक-कलशाश्चेति।

---

१. 'चिदम्बर' के मन्दिर मे नटराज मन्दिर के पूर्व और पश्चिम के गोपुरो पर चट्टानो को काटकर 'करण' बनाये गये है। प्रत्येक चित्र के नीचे नाट्यशास्त्र के तत्सम्बन्धी श्लोक भी दिये गये है। इसी प्रकार तजौर के मन्दिर मे एक दूसरी कृति है।…… ……इसकी ड्योढी मे चारो ओर करणो की स्थितियाँ खोदी गयी है। ये करण लगभग इक्यासी है। इसके अतिरिक्त सत्ताइस करण और भी है, परन्तु वे अपने रूप मे उत्कीर्ण नही है। इन स्थितियो मे प्रत्येक के चार हाथ हैं, जो शिव के नृत्य को सूचित करते है। प्रत्येक स्थिति लगभग तीन फुट की है। नाट्य के वर्णन मे यह चिदम्बरम् से भी बढ़कर है।
( भरतार्णव की भूमिका से उद्धृत )

२ लास्य दशविध ह्येतदङ्गनिर्देशलक्षणम्।
( नाट्यशास्त्रम्, बड़ोदा १६।१२० )

शुद्धनाट्ये सप्तविधास्ताण्डवा सम्मिलितीकृता.।[1] एषु प्रत्येक-स्ताण्डवो गतिकरणचारीतालैर्युक्तो भवति। 'गति' चलनस्य स्थितेश्च सयोगरूपो विद्यते। भरतार्णवे शुद्धनाट्याय षड् गतयो निर्दिष्टाः।[2] एषु दक्षिणभ्रमण नाम ताण्डवो त्रिगतिभिर्मिश्रीभूतम्। शेषेषु च ताण्डवेषु द्वयोर्मध्यगामिनी गतिरेका भवति। एव षट्सु ताण्डवेषु तिस्रो गतयो भवन्ति। गतिविरामे च करणानि प्रयुज्यन्ते। हस्त-पादसचालनक्रियायोग करणमिति व्यपदिश्यते। करणान्ते च चारीणा प्रयोगो निर्दिष्ट.। भरतार्णवे षट् करणानि चार्यश्च निर्दिश्यन्ते।[3]

प्रत्येकताण्डवस्य तालयुक्तत्वमनुनिर्दिष्टम्। तालाय च वाद्य-नियमाः समुल्लिखिता। एव 'दक्षिणभ्रमण' नामक शुद्ध-नाटच तिसृभिर्गतिभिस्त्रिभि· करणैस्तिसृभिश्चारीभिस्त्रिभिस्तालैश्च मिश्रित भवति। शिष्टेषु षट्सु ताण्डवेषु द्वयोर्मध्ये एका गतिरेक करणमेकाचारी एकस्तालश्च वर्तते। एव शुद्धनाटचस्य सप्तताण्डवेषु षड् गतयः, षट् करणानि, षट् चार्य, षट् तालाश्च निर्दिष्टा.। देशी-

---

१. दक्षिणभ्रमण पूर्व वामस्य भ्रमण पुनः।
लीलाभ्रमणमेव स्यात्भुजङ्गभ्रमण तत ॥
विद्युद्भ्रमणमेव स्याल्लताभ्रमणमेव च।
ऊर्ध्वताण्डवमित्याहु सप्तधाताण्डवक्रम ॥ (भरतार्णव १३।७०६-७१०)

२ मयूरगतिरादौ स्याद्राजहसगतिस्तथा।
कृष्णसारगति पश्चात्कीर्तिता भरतादिभि.॥
गजस्य गतिराख्याता तदनन्तरमेव च।
सिंहस्य च गति· कार्या ताण्डवपरिकल्पितम् ॥
( भरतार्णवः १३।७१२-७१३ )

३. मयूरललिते चारी समपादाभिधानकाम्।
हरिणप्लुतके चारी स्थितावर्ता तथोदिताम् ॥
गङ्गावतरण चारीमूरुद्वृताभिधानकाम्।
करिहस्ताख्यकरण चारी तां वस्त्रबन्धकाम् ॥
सिंहविक्रीडितं चारी स्यन्दितेति प्रकीर्तिताम्।
कीरभूषणक चारीमुत्स्यन्दित प्रकीर्तिताम् ॥
( भरतार्णवः १३।७१८-७२० )

नाट्ये तु पचधा ताण्डवा सम्मिलिता ।[१] एषु प्रत्येक एव ताण्डवो गतिकरणचारीतालैर्युज्यते । भरतार्णवे देशीनाट्याय पचगतयो निर्दिष्टा ।[२] गत्यन्ते करण-चारोणा प्रयोगो भवति । अत. पचभ्यो देशीताण्डवेभ्य. पचकरणानि पचैव चार्य निर्दिष्टा· ।[३] भरतार्णवे निर्दिष्टाना निकुचितादिपचप्रकाराणा देशीताण्डवाना कृते पचगतय., पचकरणानि, पच चार्य., पच तालाश्च निर्दिष्टास्तथा तेषा प्रयोग-विधयोऽपि निर्दिष्टाः ।

सप्तलास्येषु शुद्धदेशीनाटयाभ्या भिन्ना पेरूणी-प्रेङ्खणी-कुण्डली-दण्डिक-कलशाश्च पचलास्या· क्रमशो ब्रह्म-सरस्वती-विष्णु-लक्ष्मी-भ्यश्च प्रकाशिताः सन्ति । एषु पेरुण्या ब्रह्मण·, प्रेङ्खण्या सरस्वत्या, कुण्डल्याः विष्णो, दण्डिककलशयोर्महालक्ष्म्या. समुत्पत्तिर्निदिष्टा भरतार्णवे ।[४] पेरुण्यादिकलशपर्यन्तपरिगणिता पचलास्याः शब्दस्य ध्वनिना सह नृत्यन्तेऽन्ते च करणचारीभ्या योजना परिभावयेत । भरतार्णवे पचलास्याना कृते हेरम्ब-शख-नारायण-विष्णुक्रान्त-गरुड़-प्लुतनामानि पचकरणानि एवमस्पन्दित-समोत्सारित-मण्डली-मत्त-लिका-अध्यचिका-एडकाक्रीडितेति पचचार्यश्च निर्दिष्टा सन्ति । भरतार्णवानुसार पेरुणीत कलशपर्यन्ताना पचलास्याना सम्मिश्रण-

१. निकुञ्चित कुञ्चित च सम्यगाकुञ्चित तथा ।
पार्श्वकुञ्चितमेव स्यादर्धकुञ्चितक तथा ॥ —भरतार्णव. १३।७२१-७२२.

२. केकिनीगतिरादौ स्याद्राजहसो गतिस्तथा ।
हरिणीगतिराख्याता करिणीगतिरेव च ॥
सारिकागतिराख्याता ······ ··· ॥ —भरतार्णव १३।७२३-७२४.

३. मान्मथं करण चारी नाम्ना चाषगताभिधाम् ।
सौन्दर करणं चारी विच्यवामपि तादृशीम् ॥
वारुण करण चारी नाम्नाप्याङ्कितसज्ञकाम् ।
गजविक्रीडित चारी जनितामपि कीर्त्तिताम् ॥
चान्द्रं च करण चारी शकटाख्या तथेरिताम् । —भरतार्णव. १३।७२६-७२८.

४. प्रेरुणी पद्मसभूत. पेङ्खणी शारदापि च ।
कुण्डलीनाट्यकलना कलयामास माधवः ।
दण्डिकाकलशे नाट्ये ननर्त कमलालया ॥ —भरतार्णव. १३।७६०-७६१.

श्चारीदर्पणपदभाक् भवति। सप्तलास्येषु गति-करण-चारीयुक्तौ यो देशी शुद्धश्च ताण्डवो निर्दिष्टस्तस्य सयोगश्चारीभूषणपदाभिधेयो विद्यते।[1]

एवमुच्यते—यद्भरतार्णवे यौ द्वौ ताण्डवौ निर्दिष्टौ तयो. शुद्धनाट्यस्य शिवेन देशीनाटचस्य च पार्वत्या विहितोऽभिनय.। अतएव नन्दिकेश्वरेणानयोरुत्पत्तिराभ्याशिवपार्वतीभ्या प्रतिपादिता—

**शुद्धनाट्यं शिवश्चक्रे देशिनी पार्वती तथा।**[2]

भरतार्णवे ताण्डवस्य लास्यस्य च प्रयोग. स्त्रीपुरुषसयोगनिर्वाह्ये नृत्ये कृतः प्रतिभाति। एषा समष्टि. सप्तलास्यपदाभिधेया भवति। प्रारम्भे निर्दिष्टयोर्द्वयोर्देशी-शुद्धनाटचयो. मौलिकतत्त्व ताण्डवनाम्नाभिहितम्। शेषाणि च पेरुणी-प्रभृतीनि लास्यतया परिगणितानि।

**शृङ्गनाटचम्**

भरतार्णवे निर्दिष्टमेतद् यद् द्विविधाना चारीणामगहाराणा स्थानकाना च सयोगेन यन्नृत्य प्रयुज्यते तदेव शृगनाट्य निगद्यते।[3] अस्य शृगनाटचपदाभिधेयत्वे हेतुरय यत्कदापि वसन्तर्तौ भगवता शिवेन मनोरमोद्यानसुशोभिते कैलासगिरे. रम्ये शृगे पार्वतीप्रार्थनया नृत्यप्रयोगोऽय विहितः। शिवेन च स्थानकै. सार्ध तालध्वनीनामनुसारेण नर्तन विहितम्। नृत्येऽस्मिन्नादावाकाशचारीणा मध्येऽङ्गहाराणां समवसाने च भूचारीणा प्रयोगो भवति।[4] भरतार्णवे शृगनाट्यस्य नवधा भेदोपवर्णिताः सन्ति।

**पुष्पाञ्जलिः**

अभिनयदर्पणानुसारं रंगपूजां पुष्पाञ्जलिविधिं च सम्पाद्य नृत्य समारभेदित्युच्यते। भरतार्णवे सप्तलास्यादौ 'पुष्पाञ्जलिः'

१. भरतार्णव. ७४२–७५६.

२. तत्रैव १३।७६०.

३. चारीद्वयैरगहारै. स्थानकानां तु मेलनात्।
शृगनाट्यमिदं सर्वे वदन्ति सुमते बुधा.॥ –भरतार्णव· ११।६३७.

४. भरतार्णवः, अध्यायः १२.

प्रयोक्तव्य इत्युक्तम् । नन्दिकेश्वरेण दैविक-मानुष-भेदेन द्वैविध्यमुक्त पुष्पाजले.। तयोर्दैविके प्रथम पुष्पाजलिः प्रस्तूयते पश्चाच्च मौलिक-विषयानुसार नृत्य प्रयुज्यते। मानुषे तु पुष्पाजलिविधेरनन्तर 'मुखचालि' नामक नृत्य प्रस्तूयते। ?गृगनाट्ये च द्वयोरनयोः प्रयोगः प्रारम्भे भवति। तत्र दैविकं दिव्यपुरुषै. मानुष च मानवै. प्रस्तूयते। यदि दैविक कश्चिद्राजा प्रयोक्तुमर्हति, तदाऽङ्गपूजा विधाय तत्प्रस्तूयेत। मानुषे च सर्वदा शिवपार्वत्यो. पूजा विधाय सप्तलास्यादि-नृत्य समारभेत। नृत्यविधे. निर्विघ्नसमाप्तिहेतवे प्रयोगोऽय विधीयते।[1]

**अन्ते च पुनः**

**जयतु जयतु वन्द्या संस्कृता देववाणी ।**
**भवतु भवतु भूयो भारतं भारतं नः ॥**
**वसतु वसतु विश्वे सर्वदा बन्धुभावः ।**
**लसतु लसतु लोके संस्कृतालोक एष. ॥**



---

१. भरतार्णवः, अध्यायः १५।८८६—८९७.

## पारिजातहरणपर्यालोचनम्

**श्रीमती कमलापाण्डेयः**

पारिजातहरणं हि एकं पौराणिकं महाकाव्यमस्ति। इदं महाकाव्यं भगवच्छ्रीकृष्णद्वारा देवराजस्येन्द्रस्य नन्दनवनतो बलादाहृतस्य पारिजातवृक्षस्य प्रसिद्धायां कथायामवलम्बितमास्ते। अस्य महाकाव्यस्य प्रणेता देवरियामण्डलान्तर्गतपकडीग्रामवास्तव्यस्य सरयुपारीणब्राह्मणवंशावतंसस्य पण्डितकान्तानाथद्विवेदिन तनुजन्मा मान्यो विद्वान् श्रीमदुमापतिशर्मद्विवेदी कविपतिरस्ति। पारिजातहरणस्य कथानक सस्कृतवाङमये महदुत्कृष्टं विशिष्टं लोकप्रियश्च विद्यते। विभिन्नेषु पुराणेषु अस्य कथानकस्य विद्यमानत्वेऽपि प्रकृतमहाकाव्यप्रणयनात् पूर्वं पारिजातहरणविषये अनेकानि-चम्पूनाटकादीनि निर्मितानि सन्ति। (१) सर्वप्रथम कविकर्णपुरद्वारा विरचितमष्टदशसर्गात्मकं भौगोलिक पारिजातहरणमहाकाव्य प्रसिद्धं विद्यते। एतत् मिथिलाविद्यापीठग्रन्थमालात प्रकाशितं वर्तते। यत्र तत्र विच्छिन्नं तत् कविशेखरबदरीनाथझामहोदयद्वारा पूरितं च वर्तते। (२) द्वितीयं दशसर्गात्मकं पारिजातहरणं महाकाव्यं द्वादशशताब्द्या विद्यमानेन कादम्बवशीयस्य राज्ञ· कामदेवस्य सभासदस्येन कविराजेन निर्मितमस्ति, यस्य हस्तलिखिता प्रतिः मद्रपुरीय ( मद्रास ) राजकीयप्राच्यहस्तलिखितग्रन्थागारे सुरक्षिता वर्तते। (३) तृतीयस्य पारिजातहरणकाव्यस्य निर्देशो भोजराजस्य शृंगारप्रकाशे विद्यते। (४) चतुर्थं पारिजातहरणकाव्यं नारायणपण्डिताचार्यरचितमस्ति, यत् पुनात: प्रकाशितमास्ते, तस्य हस्तलेख. प्राच्यशोधसंस्थानमहीसूरे (मैसूर) उपलभ्यन्ते।

एका पारिजातहरणचम्पूनायिका चम्पूरप्युपलभ्यते यस्या प्रणयनं कृष्णशेषेण कृत विद्यते।

पारिजातहरणकथानकमवलम्ब्य सर्वतोऽधिकानि नाटकानि निर्मितानि सन्ति। तेषु (क) अतिप्रसिद्धं प्राचीनं च पारिजातहरणनाटकंचतुर्दशशताब्द्यां वर्तमानेन विद्यापतिपूर्ववर्तिना हिन्दूपतिसभापण्डितेन केषाञ्चनमतेन राज्ञो लक्ष्मणसेनस्य मन्त्रिणा मिथिला-

भिज्ञेन उमापतिधरोपाध्यायेन प्रणीतं वर्तते। (ख) द्वितीयं पारिजातहरणनाटक पञ्चदशशताब्द्यां विद्यमानेन विजयनगरनृपतेः कृष्णदेवराजस्य सभाकविना छन्दोमञ्जरीलेखकस्य गङ्गादासस्य जनकेन कविचन्द्रदिवाकरेण लिखितमस्ति। (ग) तृतीयं पारिजातहरणनामकं नाटकं षोडशशताब्द्यां वर्तमानेन तञ्जौरनरेशेन रघुनाथमहाराजेन कृतं विद्यते। (घ) चतुर्थं सप्तदशशताब्द्यां वर्त्तमानेन काजीस्थेन श्रीवैङ्कटेशाचार्यपुत्रेण कुमारताताचार्येण प्रणीत विद्यते। (ङ) पञ्चमं पारिजातनाटक मूककतिमन्नानामकेन कविना कृतमस्ति।

एव पुराणप्रख्यातपरम्पराप्रचलितमाख्यानमाधायैव अस्यां विंशतिशताब्द्यां विविधशास्त्रपारङ्गतेन काव्यकलानिष्णातेन महाकविना कविपतिना श्रीमदुमापतिशर्मद्विवेदिमहानुभावेनाऽपि प्रस्तुतपारिजातहरणमहाकाव्यस्य प्रणयन कृत यस्य प्रकाशन काश्यां १९५७ ईशवीये वर्षे जातमस्ति।

**कथावस्तु**

श्रीकविपतिप्रणीतपारिजातहरणमहाकाव्यस्य कथावस्तु इत्थंकार वर्तते। कुण्डिनपुरनरेशस्य भीष्मकस्य सुता भगवतः श्रीकृष्णस्य धर्मपत्नी रुक्मिणी देवी पत्युरनुमति प्राप्य व्रतोद्यापनार्थं पत्या परिजनैः सपत्नीभिश्च रैवतकपर्वतमुपगच्छति। व्रतावसाने देवर्षिनारदस्यापि तत्रागमन जायते। भगवता श्रीकृष्णेन कृतातिथ्यो देवर्षिः—भगवन्! अहम् इन्द्रस्याज्ञया सरस्वतीतीरमुपेत्य तीव्रं तपस्यतस्तत्पितुः प्रजापतेः कश्यपस्य समीपे गतवानासम्। अतो रुक्मिणीदेव्या यज्ञेन सम्मिलितः। अतः क्षमा याचे। देव! अस्मिन्नेवावसरे भौमासुरः कश्यपधर्मपत्न्या अदितेः कुण्डले अपहृतवान्। तस्य समीपे गत्वाऽपि मया तपस्यतस्तस्य मनः क्षोभभयात्तद्वृत्तं तस्मै न निवेदितम्। अथापि मन्मुखात्तेन भवानेवमभ्यर्थितः—

**वाच्यो मुरारिर्जगदान्तरात्मा यमाश्रिता जाग्रतिनोऽभिलाषाः।**
**यावत् तपस्याभिरतोस्मि तावद् बाह्योऽपि भारस्त्वयि मे निरूढः॥**

( पा० ह० म० ५।२८ )

हे हरे ! तस्य महात्मन सन्देशं भवदन्तिके प्रापयितुं तथा भवतोऽलभ्यदर्शनेनात्मानं कृतार्थयितुञ्च त्वदन्तिके उपस्थितोस्मि। जनार्दनः दुष्टेन भौमासुरेण देवमातुरदितेः कुण्डलयोरपहरणात् देवराजो महेन्द्रो महान् दु खिनो वर्तते। अस्मिन् विषये उपेन्द्रेण भवता तस्य नूनं सहाय्य विधेयमित्यभिधाय उपहारस्वरूपं तस्मै पारिजातपुष्पञ्च प्रदाय तद्वैशिष्ट्यं ब्रवीति।

**न म्लायति क्वचन नापि जहाति गन्धा-**
**नन्धानपि प्रगुणदिव्यदृशा युनक्ति।**
**सर्वं प्रयच्छति मनोनिहितं च जन्तोः**
**सन्तोषत्यलमशेषगुणे सतृष्णम्।** ( पा० ह० म० ६.७ )

भगवान् श्रीकृष्णश्च तत् पुष्पं सादरमादाय रुक्मिण्यै प्रददाति। वृत्तान्तमिद सखीमुखाच्छ्रुत्वा सत्यभामा मानवती जायते। तद् ज्ञात्वा भगवान् श्रीकृष्णचन्द्रः तस्या मानापनोदाय पारिजतवृक्षमेवेन्द्रस्य नन्दनवनादानीय सत्यभामाया भवने आरोपयितुं प्रतिज्ञापयति। यथा—

**पारिजातकपुष्पाणि यदिच्छस्यतिकोपने।**
**तदादातास्मि सुश्रोणि सत्यमेतद् ब्रवीमि ते॥**
**स्वर्गास्पदादानयित्वा पारिजातं द्रुमेश्वरम्।**
**गृहे ते स्थापयिष्यामि यावत्कालं त्वमिच्छसि॥**

( हरिवंश-विष्णुपर्वणि ६८.३१,३२ )

तदनन्तर स देवर्षिद्वारा पारिजातवृक्षं एतुमिन्द्रस्य सविधे सन्देशं प्रहिणोति। यथा—

**आस्तां सन्देशमेतं मम हर हरये देहि देवद्रुमं मे**
**वात्सल्यात् सत्यभामां मुदमधिशयितुं प्रीत्युपस्कारसारम्।**
**नो चेत्तत्र प्रतिज्ञां विहितपरिकरोऽहं गदापाणिरुच्चै-**
**राक्रंस्ये नन्दनं त्वद्वनमवनिगतं तं तरुं कर्तुकामः।**

( पा० ह० म० १०.७६ )

अत्रैव पारिजातहरणमहाकाव्यस्य कथापूर्वार्धं समाप्नोति। उत्तरार्धे तु नारदमुखाद् इन्द्रद्वारा पारिजातवृक्षमदातुं कृतं निश्चयमाकर्ण्य भगवान् श्रीकृष्ण इन्द्रमाक्रान्तुं पक्षिराजं स्ववाहनं गरुड-

माह्वयति। सहसोपस्थिते गरुडे ससात्यकिप्रद्युम्नसत्यभामाभिः सह अमरावतीं गत्वा नन्दनवनतो बलात् पारिजातवृक्षमुत्पाटयति। तदप्रियकरं वृत्तं निशम्य देवराजइन्द्रः क्रुद्धः सन् तेन सह योद्धुं प्रवर्तते। ततस्तयोः महद् युद्धं जायते। तदनन्तरं देवगुरुबृहस्पतिः इन्द्रं भर्त्सयित्वा तयोः सन्धिविधानाय कश्यपं बोधयति। कार्येऽस्मिन् सफलतायै कश्यपः स्तुत्या शिवं सन्तोष्य वरं प्राप्नोति। ततः कश्यपः तत्रोपस्थाय तयोः समीपे मातृमहिमानं वर्णयित्वा भौमासुरं हन्तुं श्रीकृष्णं प्रेरयति। तदनुसार स त्वरितं पाताललोकं गत्वा भौमासुरं निहत्य तेन हृतानां राज-कन्यकानाञ्च उद्धारं विधाय अदितेः कुण्डले गृहित्वा देवलोकमागत्येन्द्राय ददाति। तेन परमप्रसन्नः स श्रीकृष्णाय पारिजातवृक्षमुपहरति। स च तमादाय द्वारिकामागत्य सत्यभामाभवने प्रतिष्ठापयति। यथा—

**इति हि भगवती सा मन्त्रिता वल्लभेन**
**प्रणयपुलकिता तत्पाणिपद्मेन नीत्वा।**
**निजनवलनिकेतस्याङ्गने मङ्गलेन**
**प्रियकरगकराब्जा रोपयामास रम्ये॥**

(पा० ह० म० २१. १३)

अत्रैवेकविंशतिसर्गात्मकपारिजातहरणकाव्यस्य कथावस्तुसमाप्नोति।

**कथावस्तुस्रोतः**

यद्यपि पारिजातहरणस्य कथानकं विभिन्नेषु पुराणेषु वर्णितमस्ति, तथापि हरिवंशस्य प्रसिद्धं कथानकं लक्ष्यीकृत्यैव महाकविना काव्यमिदं प्रणीतं विद्यते। तथाचोक्तं स्वयमेव तेन—

**हरिवंशे कथानकमिदं स्थलद्वय उपलभ्यते।**

(१) हरिवंशपुराणप्रसिद्धपारिजातहरणप्रकरणं लक्ष्यीकृत्य मानसं एक विष्णुपर्वणि द्वयोः ६३–६४ अध्याययोः द्वितीयश्च द्वादशसु ६५–७६ अध्यायेषु। तत्र द्वितीयस्य स्वरूपं तु प्रागुक्तमेव, प्रथमस्य रूपमित्थमास्ते। प्राग्ज्योतिष्पुराधीश्वरेण भौमासुरेण सज्जनान् प्रपीडयन् कश्यपपत्न्या देवमातुः अदितेः कुण्डले अपहृत्य देवानामपमानं कृतम्। तस्य तं दुर्व्यवहारमसह्यं मत्वा तपस्विभिर्मिलित्वा

भौमासुरं दमयितुं साधुजनांश्च संरक्षितुं द्वारिकाधीशो भगवान् श्रीकृष्णोऽभ्यर्थितः। ततः स्वावतारप्रयोजनं सफलयितुं संग्रामप्रियया प्रियभार्यया सत्यभामया सह प्राग्ज्योतिष्पुरमाक्रम्य संग्रामे भौमासुरं पराजित्य अदितेः कुण्डले आदाय भगवान् श्रीकृष्णो दातुं देवलोकमुपगतः। तत्रेन्द्रस्य नन्दनवने वर्तमानं पारिजातवृक्षं विलोक्य स्वकीयभवने समारोपयितुं सत्यभामा वाञ्छितवती। तदनुसारं भगवान् श्रीकृष्णः तस्यापहरणं कृत्वा द्वारिकामागत्य तं सत्यभामाभवने स्थापितवान्।

श्रीमद्भागवते दशमस्कन्धस्य ५९ अध्याये विष्णुपुराणे पञ्चमस्यांशस्य २९ अध्याये चेदमेवरूपं न्यूनाधिकतया समुपलभ्यते। हरिवंशे उभयत्र कथानकस्यानुशीलनेन स्पष्टं प्रतीयते यत् कविपतिना विष्णुपर्वणः ६५-७६ अध्यायेषु वर्तमानं द्वितीयं रूपमेवात्मनो महाकाव्यस्याधीरीकृतम्।

रसव्यञ्जना

प्रस्तुते महाकाव्येऽनेकेषां रसानां भावानां च समावेशो विद्यते। बहुषु स्थलेषु मिश्रितरसाना व्यञ्जना जातास्ति यदिदं निश्चेतुं ····· विनोदयितुं वाङ्मयी सन्ततिमपि पवित्रयितुं असन्तुष्यच्चेतसैवेदं काव्यं प्रोक्तानां महागुरूणामाशी:कणसञ्चितवाग्वित्तसाधनो द्वारिकाया वर्णनमादिं कृत्वाऽरभे।

न शक्यते यदत्र कस्य रसरूपप्रामुख्यमस्ति। यद्यपि काव्यस्यास्य भूमिकालेखकेन कविपतेर्बाल्यसखिना रुक्मिणीहरणमहाकाव्यप्रणेता दार्शनिकसार्वभौमेन सुधीसुधानिधिना पण्डितकाशीनाथद्विवेदिमहाभागेनात्र काव्ये भक्तिरसस्य शान्तरसस्य वा प्राधान्यमन्येषां रसानामङ्गित्वं स्वीकृतमस्ति। विभिन्नैः जनैः कृतायां श्रीकृष्णस्तुतौ तपश्चरणरतेन कश्यपेन कृतायां शिवस्तुतौ च विशेषतो भक्तिरसव्यञ्जना जातास्ति।

वस्तुतोऽत्र महाकाव्ये येषां रसानां व्यञ्जना जातास्ति तत्र शृङ्गाररसो वीररसश्च प्रधानौ स्तः। काव्यस्यास्य नायको भगवान् श्रीकृष्णो वीरशृङ्गाररसस्वरूप एवास्ते। समस्ते काव्ये दृष्टिपातेन प्रतीयते यत् अनयोरपि प्रमुखः शृङ्गार एवास्ति रसः। वीररसस्तु

शृङ्गाररसस्याङ्गतया समागतोऽस्ति। प्रस्तुतमहाकाव्यस्य मुख्ये कथानके मूलरूपेण निहित तत्त्व सत्यभामाया मानमेवास्ति। यत् शृङ्गाररसस्यैवास्ति एकमङ्गम्। अस्या एव मानात् कथावस्तु अग्रेसरी भवति। अस्यैवाङ्गरूपेण नायकस्य भगवतः श्रीकृष्णस्य वीरोचित-प्रयासोऽपि भवति। तथा च शृङ्गाररस एवास्य महाकाव्यस्याङ्गी-रसोऽङ्गीकार्य· अन्ये च वीररसादयोऽस्यैवाङ्गानि मन्तव्यानि।

**शृङ्गाररसः**

रसस्यास्याभिव्यक्तिरत्रमहाकाव्ये प्रमुखतया रूपत्रयेण जातास्ति, प्रमुखरूपेण, अङ्गरूपेण प्रासङ्गिकरूपेण च। तत्र प्रमुखं रूपं सत्य-भामायाः माने तत्प्रशंसनप्रयासे चोपलभ्यते। अङ्गरूप रुक्मिणी-श्रीकृष्णदाम्पत्यप्रेम्णा तदुचितव्यवहारद्वारा च व्यञ्जते। यद्यपि रुक्मिणी सत्यभामे उभे अपि भगवतः श्रीकृष्णस्य··· ·· ··· ···

(१) ततोऽत्र काव्ये महाभारत एव भक्तिः शान्तो वा रसोऽङ्गी इतरे रसाश्च यथावसरमुपस्थिता अङ्गानि (पारिजातहरणे १०।)

प्रिये पत्न्यौ स्तः तत्रापि रुक्मिणी प्राधानमहीषी विद्यते, किन्तु महा-काव्यस्यास्य कथावस्तु मूल सत्यभामाया मानमेवास्ति। रुक्मिण्याः पतिप्रेम्ण· चित्रण तस्य पृष्ठभूमितयाङ्गरूपेण वा प्रस्तुतमस्ति। अतोऽत्र काव्ये व्यक्तशृगारस्य प्रमुख रूपं सत्यभामाया माने तस्य प्रशमनप्रयासे चास्ति। रुक्मिणीविषयकशृङ्गारस्तु तदङ्ग-रूपोऽस्ति। अस्मिन् काव्ये व्यक्तशृगारस्य प्रासङ्गिक रूप तदस्ति यत् द्वितीये सर्गे प्रभात-वर्णनप्रसङ्गे विभिन्ननायकनायिकाना शृगारात्मकव्यवहारैर्व्यज्यते। उक्तेषु शृंगारस्य त्रिषु रूपेषु प्रमुख रूप मुख्यतो विप्रलम्भात्मकमस्ति। यदन्ते संयोगात्मकं जायते। अङ्गरूपं सयोगात्मकमस्ति प्रासङ्गिकं रूपं च सयोगविप्रयोगात्मक-मस्ति। सहैव प्रमुखेरूपे तीव्रतास्ति। अङ्गरूपमुदात्त शान्तमेव गभीरम्। अथ च प्रासङ्गिकरूपं क्रीडामात्रमस्ति। अत्र महाकाव्ये कविना सयोगशृङ्गाररसस्य परिपाक कर्तुं मानवत्याः सत्यभामाया वियोगशृगारानुरूपाया रसमयीमनोभूम्याः परिचयः प्रस्तुतोऽस्ति। एकस्या विशिष्ट परिस्थितौ प्रेममय्या मनोदशाया अतिरमणीय चित्रणं दृश्यते।

सत्यभामायाः क्रोधानले श्रीकृष्णप्रेमोदमिश्रणात् तन्नेत्राभ्यामेवाजस्रमश्रुजलधारायाः प्रवाहः प्राचलत्। येन श्रीकृष्णोऽपि अधीरो जातः। शोकस्य क्रोधस्य वा कारणं पृष्ट्वा तां सान्त्वयितुं प्रेमसिक्तानि विनम्रवचनानि उक्त्वा यदा क्षमादानाय साञ्जलिशिरोऽनमयत्तदा तया निषेधं कुर्वन्त्या प्रहसितम्।[1]

तदनन्तरं प्रशन्नता निह्नुवती सत्यभामा श्रीकृष्णमवोचत्—यत् भवत् प्रेमरङ्गरञ्जितायाः परिजातपुष्पप्राप्तिगर्वितायाः रुक्मिण्याः अग्रे कस्याः वराक्याः सौभाग्यं सम्भवेत् ?[2] तत्सेर्ष्यं वचनं निशम्य भगवान् श्रीकृष्णः तदग्रे प्रतिज्ञातवान्।[3]

तदाकर्ण्य सत्यभामायाः मानभङ्गो जातः। प्रासीदच्च सा येन श्रीकृष्णस्य शुष्कं दृश्यं सरसं जातम्। एवमुभयोः सत्यभामाश्रीकृष्णयोः हृदये प्रशन्नतया सरसे जाते मानात्मक-वियोगश्रृंगारः स्वाभाविक-सयोगश्रृगारे परिणतो जातः। एवं पर्वतक्रीडायामानन्दमयं सयोगात्मकं चरमसीमानमुपगतविलोक्यते यस्योत्कर्षः एकविंशतिसर्गे उपलभ्यते।

काव्येऽस्मिन् अङ्गरूपश्रृगारो रुक्मिणीविषयकोऽस्ति। सा हि

---

१. कृत्वा करे तच्चिवुकं कथञ्चित् स्फुरत्तरास्त्रालपिताधरास्यम्।
निभालयन् स्वान्तरमीश्वरोऽपि बभार साधारमधीरतायाः॥
(पा० ह० म० ८।३६)

(क) क्षमस्व मे प्रणसमे रमे चेद् वृद्धिं व्रजन् ते भ्रमजोऽपराधः।
त्वदङ्घ्रिजाज्ञा हृदयेशि वोढुं नतं शिरोऽप्यञ्जलिरेव बद्धः॥
(पा० ह० म० ८-७५)

(ख) तावत्सप्रतिषेधहुङ्कृतिमती स्मेराधराऽवर्तते।
(पा० ह० म० ८-७६)

२. देवर्षिदत्तसुरभूमुरपुण्यरत्नं प्रेम्णा परिष्कृतमहो भवतोऽधिगम्य।
उन्निद्रभद्रमहिमा यदि रुक्मिणी सा का ते नतिं सहतुं नाथ! परा वराकी॥
(पा० ह० म० ९।२)

३. सत्य प्रिये प्रतिश्रृणोमि श्रृणु त्वमद्य, श्रृण्वन्त्यमी अपि सुरा स हि पारिजातः।
वर्षतवाजिरगतोऽस्तुमयाहृतो द्रु-र्वर्षन्नभीष्टकुसुमानि भजाशु हर्षम्॥
(पा० ह० म० ९।४१)

यदा रैवतके पर्वते व्रतोद्यापनार्थमनुमतये प्रार्थितवती तदा श्रीकृष्णः सहासमनुमतिं प्रादात्। अत्रोदात्तदाम्पत्यप्रेमात्मकसंयोगश्रृंगारस्य दिव्य स्वरूपमवलोक्यते। यस्य विकशित रूपं चतुर्थे सर्गे प्राप्यते।[1]

श्रृङ्गारस्य प्रासङ्गिकरूपं द्वितीये सर्गे दृश्यते। यदा बह्वो नायका नायिकाश्च रासक्रीडायां प्रवर्तते। खण्डिताया नायिकाया नायकस्य च सम्वादे श्रृंगारस्य मनोरम चित्रण जातमस्ति। यथा—

**कलुषाकृति काननासि किं चरमाशाविनिमज्जनाद्धरेः।**
**नवता पुनरेष्यति प्रिये ? न यथापूर्वमुपैति यद् गतम्॥**
**गतमेतदथ प्रसीद मे यदि ते स्यात् मयि तुल्ययोगिता।**
**ननु योगमुपैहि निर्भरं न वियुज्येत परापि मादृशी॥**

(पा० ह० म० २.१५-१६)

**वीररसः**

काव्येऽस्मिन् ङ्गप्रयुक्तरसेषु श्रृ ारान्तर द्वितीयं स्थानं वीररसस्यास्ति। रसस्यास्य बीज तु तदैव दृष्टिगोचरो भवति यदा भगवान् श्रीकृष्णो देवलोकतः पारिजातवृक्षमानतु वीरोचितां प्रतिज्ञां करोति। यदा स नारदद्वारा इन्द्रसमीपे स्व-सन्देश प्रहिणोति 'यदि इन्द्रेण पारिजातवृक्षो न दास्यते तदा तमहमाक्रमिष्ये।' अत्र वीररसस्याङ्कुर उत्पद्यते। यदा च गरुडमारुह्य देवलोकमुपगम्य बलात् पारिजातवृक्षमुत्पाट्य निर्भिको अमरावत्यां विचरति तदनन्तर युद्धे इन्द्र पराजितप्रायं करोति तदा वीररसस्य व्यञ्जना चरमसीमानमधिगच्छति। एवं भौमासुरेण सह युद्धे तद्वधे च वीररसस्य महती व्यञ्जना जायते। युद्धावसरे रौद्ररसस्याभिव्यक्तिः परिलक्ष्यते। देवर्षिणा नारदेन तपस्विभिश्च कृताया स्तुतौ कश्यपद्वारा विहितायां शिवस्तुतौ च भक्तिरसस्य शान्तरसस्य चानुभूति भवति। एवमत्र महाकाव्ये प्रमुखतया श्रृङ्गाररसस्य तदङ्गतया चेतरेषां रसाना स्वाभाविकीमर्यादानुकूलाभिव्यक्ति र्जातास्ति। अत्र विषये कविरतिः सफलो विलोक्यते। एतदतिरिक्तं कविना विभिन्नरसानामङ्गतया आश्रयाणामवलम्बनानाञ्च रूपं विचित्रमास्ते। विषयेऽस्मिन् कविना साफल्यमवाप्तमास्ते, यस्य

१. एवं परस्परप्रीत्या स्वैरालापविनोदिनोः।
दम्पत्योराजगामाथ नभसा नारदो मुनिः॥ (पा० ह० म० ४-७६)

निदर्शन मानवत्या सत्यभामाया माने क्रोधे च परिलक्ष्यते। आलम्बन-रूपहावभावादिनामाश्रयानुभावानाञ्च वर्णनं विधाय कविना महत्या सफलतया विविधाना स्थायिभावाना सञ्चारिभावनाञ्चाभिव्यक्ति कुर्वता रसपरिपाक सुव्यवस्थित कृतोऽस्ति ॥

**चरित्र-चित्रणम्**

पारिजातहरणमहाकाव्यस्य प्रमुखानि पात्राणि सन्ति—भगवान् श्रीकृष्णः, सत्यभामा, रुक्मिणी, नारदः, इन्द्रश्च। एतदतिरिक्तानां कियतां पात्राणां विद्यतेऽल्पभूमिका। अस्य महाकाव्यस्य नायकोऽस्ति भगवान् श्रीकृष्णः, यतो हि तद्द्वारैव महाकाव्यस्यास्य प्रमुखतमा घटना पारिजातहरणात्मिका सम्पद्यते तथा तस्यैव मानवत्या-प्रियतमाया सत्यभामाया प्रसन्नतारूपा फलप्राप्तिर्भवति। विभिन्नाना पात्राणा चरित्रचित्रणमेव वर्तते।

**भगवान् श्रीकृष्ण :**

अयमादर्शः सुन्दरः ललितकलाप्रिय दयालुः सहृदयः पराक्रमी लोकसेवानिरत. अद्भुतशक्तिशाली महापुरुषोऽस्ति। तस्मिन् उदारता, नम्रता, मृदुभाषितादयो गुणा विराजन्ते। स दक्षिणनायक. सन्नपि आदर्शयतिरप्यस्ति। रुक्मिण्यै व्रतोद्यापनस्यानुमतिं तत्काल-मेव प्रददाति। सत्यभामाया मानमवलोक्य पारिजातवृक्षमानेतु प्रतिज्ञापयति। एवं सत्यप्रतिज्ञोवीरपुरुषश्चास्ति। इन्द्रेण सह युद्धे नैजमुत्कृष्ट पराक्रमं प्रदर्शयति। भौमासुरेण साक सग्रामे तस्याद्भुत शौर्यं दृष्टिगोचरो भवति। महता पूज्याना धार्मिकाणाञ्च कृते तस्य हृदये महानादरभावो वर्तते। अतएव कश्यपस्य कथनान्तरमेव युद्धाद्विरमति। इन्द्रेण सह सन्धौ जाते रागद्वेषौ विश्मरति सः। अदितेः कुण्डलयोरानेतु तस्मिन् कर्तव्यपरायणताया दर्शनं भवति। स विलासी नायको नास्ति, अपितु लोकसेवकोऽस्ति। महाकाव्य-स्यास्य नायिकाया सत्यभामाया तस्यातिशय प्रेम वर्तते, परमिदं प्रेम लोकसेवाया कर्तव्यपरायणताया प्रतिज्ञापालने च बाधकं नास्ति। पुराणप्रतिपादितात् श्रीकृष्णात् अस्य महाकाव्यस्य श्रीकृष्णो भिन्नो नास्ति अपितु अत्रापि स अवतारिपुरुषत्वेन प्रस्तुतोऽस्ति, यस्य दिग्दर्शन विंशतिसर्गे ऋषिभिः कृतायां स्तुतौ पञ्चमे सर्गे च नारदद्वारा कृतायां स्तुतौ च जायते।

**सत्यभामा**

यद्यपि श्रीकृष्णस्य पत्निषु रुक्मिणी प्रधाना महिषी आसीत्तथापि प्रमुखघटनाया दृष्टिपातेन सत्यभामैवास्य काव्यस्य नायिका अभिमतास्ति। एषा श्रीकृष्णस्य प्रिया पत्नि आर्यनारित्वेन वर्णितास्ति। इयमतिसुन्दरी आसीत्। अस्या मुखार्थ सुधानिधिप्रभृतिविशेणानि सौन्दर्यसूचकानि सन्ति। कपोतकण्ठीप्रभृतिविशेषण तु मधुरभाषिणीत्व व्यनक्ति। इयमेका सुलभकोपना मानिनी नायिकात्वेन वर्णितास्ति। श्रीकृष्णद्वारा रुक्मिण्यै पारिजातपुष्पप्रदानादेषा सहसा कोपाविष्टा सती सामान्यनारीवत् सापत्न्येर्ष्याग्नौ दन्दह्यमाना मानवती जाता। एतस्याः पत्यौ श्रीकृष्णेऽत्यन्त प्रभावोऽप्यस्ति। अतएवास्या मानमवलोक्य भगवान् श्रीकृष्णो देवलोकात् पारिजातहर्तुं प्रतिज्ञापितवान्। सत्यभामायाश्चरित्रे स्वभाविकी मानवीयदुर्वलता विलोक्यते। तस्या विचारशक्तेर्गम्भीरतायाश्चाभावो विद्यते। येन सा सपत्नीजन्येर्ष्याद्वेषयोरनुभूति करोति। एव सत्यपि श्रीकृष्णस्य विवाहिता पत्नित्वात्तस्या मनसि प्रगाढप्रेमाप्यस्ति यत् स्वाभाविकरूपेण तदन्तःकरणेऽजस्रं प्रवहति। अतः सा मान निह्नोतुं न शक्नोति। कृष्णे उपस्थिते सहसा तन्मान प्रदर्शयति। श्रीकृष्णेन प्रबोधिता सती सा सहसा शान्ता भवति। एवं तस्या वास्तविक पतिप्रेम वर्तते। एव सा नारीणा सर्वाभि. स्वाभाविकविशेषताभिः विभूषिता एका आर्यनारीत्वेन कल्पितास्ति।

**रुक्मिणी**

भगवतः श्रीकृष्णस्याष्टसु पट्टराज्ञीषु रुक्मिणी प्रधाना महिषी आसीत्। पारिजातपुष्पप्राप्त्यनन्तर देवर्षिणा नारदेन स्पष्टं प्रतिपादितम्। यथा—

**अष्टौ प्रियाः प्रकृतयो हि यथा हरेर्यास्तासां प्रधानमसि निश्चितमेतदद्य।**
**सत्यापितं भगवतोपहृतं प्रसूनराजं न लब्धुमिममर्हति यत् त्वदन्या॥**
( पा० ह० म० ६ १८ )

सत्यभामायां सत्यपि विशेषप्रेम्णा रुक्मिण्या कथमपि तत् न्यूनं प्रेम नास्ति। स्वाभाविकैः सात्विकैः गुणैः सा पत्युः सर्वाधिकं सम्मानं लभते। अतएव देवर्षिणा नारदेन प्रदत्त पारिजातपुष्प तस्यै एव समर्पितवान् भगवान् श्रीकृष्ण.। तस्या सहजे स्वभावे गभीरताया आदर्शस्य च दर्शनं जागायते। सा श्रीकृष्णतः सम्मानं प्राप्यापि न

गर्वमावहति। नारदद्वारा आत्म-प्रशसां श्रुत्वापि सा स्वयमात्मान श्रीकृष्णस्य सेविकां मत्वा स्व सौभाग्यं मनुते।

**साप्येतदीयमहिमानमुदीरयन्तं रुक्मिस्वसा तमृषिराजमिदं जगाद।**
**शिष्यास्मि ते भगवतोऽस्य च सेविकेति नातः परं किमपि सौभगसूचनं मे॥**
(पा० ह० म०२१)

काव्येऽस्मिन् रुक्मिणी भगवतः श्रीकृष्णस्य माया प्रोक्तास्ति। सा सांख्यानां प्रकृतिः, मीमांसकाना क्रिया, वेदान्तिनां ब्रह्म, योगिना सिद्धिरप्युक्ता वर्तते। एवं सैका दिव्या नारी वर्तते यस्याश्चरित्रमतिविचित्रमुदात्तरूपेण चित्रितमस्ति।

**देवर्षिनारदः**

पारिजातहरणमहाकाव्ये देवर्षिनारद. समाजसेवीरूपेणाङ्कितोऽस्ति। चतुर्थे तस्य भवति प्रवेशः, पञ्चमे सर्गे च स इन्द्रसमीपे श्रीकृष्णस्य, श्रीकृष्णसमीपे कश्यपस्य च सन्देशवाहकत्वेन प्रस्तुतोऽस्ति। स हि प्रवीणवक्तृरूपेण चित्रितो विद्यते पारिजातहरणे। इन्द्रकृष्णयोर्मध्ये सन्देशप्रसारणे श्रीकृष्णस्य स्तुतौ सत्यभामारुक्मिण्योः प्रशसाया तस्याद्भुत वाक्कौशल दरीदृश्यते। स धैर्यवान् गम्भीरस्वभावो व्यक्ति प्रतीयते। एव लोकहितमेवाभिलक्ष्य कस्मिश्चित् कार्ये प्रवर्तते। स सत्यभामा पारिजातपुष्पप्राप्तये समुत्सुकयति येन श्रीकृष्णो देवलोक गच्छति तत्रेन्द्रस्य प्रेरणया भौमासुरस्य वधाय प्रवर्तते। अतएव सत्यभामाया मानमालोक्य स हृदये प्रसीदति। एव देवर्षि एक कलहप्रियो व्यक्तिरासीत्। स श्रीकृष्ण प्रति आत्मन. कलहप्रियत्व व्यञ्जयति॥

**देवराजइन्द्रः**

पुराणवदत्र काव्येऽपि देवराजइन्द्रो देववद्वर्णितो वर्तते। स साहसी पराक्रमी युद्धप्रियश्च व्यक्तित्वेनाङ्कितोऽस्ति। श्रीकृष्णद्वारा पारिजातवृक्षयाचनविषये स नारदमुखात् सन्देश श्रुत्वा देवलोकस्यापमान मत्वा निश्चिनोति यत् युद्ध विना पारिजातस्य पत्रमप्येक न प्राप्तु शक्यते।[1]

---

१. यत् प्रोक्त एव हि मयाऽनुमित मत तत् तस्याधुना त्वमिह तथ्यमदो ब्रवीमि।
तद्याहि त बद तरोदलमप्यलभ्यं युद्धादृतेऽथ मुनिमित्युदवोचदिन्द्र॥
(पा० ह० म० ११.१००)

तदनन्तर स युद्धाय प्रवर्तते। एव वीर योद्धासन्नपि स उदार: कृतज्ञश्च वर्तते। अतएव भौमासुर हत्वा निवृत्ताय श्री कृष्णायोपहारस्वरूपपारिजातवृक्षं स्वयं समर्पयति। एवमेतस्यान्येषाञ्च चरित्रे दृष्टौ दीयमानाया स्पष्टं प्रतीयते यत् कविना समेषा पात्राणा चरित्राणि स्वाभाविकरूपेण चित्रितानि सन्ति। तत्तत्पात्राणां सम्वादै. अभिनयद्वारा वा तेषां चरित्रं स्वत एव स्वाभाविकरूपेण पाठकानां समक्षं समुपतिष्ठते।

**प्रकृति-चित्रणम्**

महाकाव्यत्वदृष्टचा सस्कृतमहाकाव्येषु प्रकृतिचित्रणमप्येकमावश्यक तत्त्व विद्यते। प्रस्तुत महाकाव्यमपि आदितोऽन्तपर्यन्तं प्रकृते विभिन्नैः दृश्यैः परिपूर्णमस्ति। कविपतिना प्रकृते. कलापूर्णभावात्मक च चित्रणमस्माक सम्मुखे समुपस्थापित वर्तते। नगर-समुद्र-सन्ध्या-प्रभात-वन-पर्वत-नद-नदी-पुष्प-ऋतुप्रभृतीना प्रकृतेः विविधरूपाणा वर्णनंमहद्रमणीयमस्ति। अस्य महाकाव्यस्य मुख्य घटनाक्षेत्र द्वारकापुरी, तत्समीपवर्ती रैवतकपर्वत: तथा महेन्द्रस्यामरावती च, यत्र प्रकृतेः सजीव सुन्दर स्वरूप स्वत एवोपलभ्यते। यत्रैकतः प्रकृते. नैसर्गिक सौन्दर्य महत्स्पन्दनशील भूत्वा सम्मुखे समुपतिष्ठते, तत्रापरत्र कविना प्रकृतिमुद्दीपनरूपे वर्णयता तस्या सुरुचिपूर्णमानवीकरणकृतमास्ते। एकत्र वापी[1] वर्णयता कविना सा मनोहारिणी नायिकारूपेण वर्णिता, अन्यत्र च सरसीसरोवरौ[2] रमण कुर्वन्तौ नायक-नायिकारूपेण चित्रितौ स्त.।

सूर्योदयसमये मनोमहोत्सववर्णनमहद्रुचिकर प्रतिभाति।[3]

---

१. परिस्फुरन्मीनमनोहरेक्षणा क्षणे-क्षणे स्रस्तदुकूलशैवला।
चिरादहोच्छ्रायिपयोधराः सदा न वापिका कस्य हरति मानसम्॥

२. अहर्निश साधुरसातिरेकिणौ प्रकम्पनैः सात्विकभावमास्थितौ।
पदे-पदेऽस्यास्तु मिथो मनोहरौ सदा रमेते सरसीसरोवरौ॥
( पा० ह० मा० १।२०।१६. )

३. अधुनैव मुदा द्विजावली श्रुतिसन्मङ्गलमङ्ग गायति।
अरुणांशुकरञ्जिता दिशः परिशसन्ति महोत्सवक्षणम्॥
( पा०ह०मा० २।२४ )

श्लेषालंकारद्वारा शरदृतु वाग्देवतारूपेण वर्णिता विद्यते।[1] त्रिवेणी-सरोवर-वन्यगजादिवर्णने विशुद्धालम्बनरूपे चित्रितप्रकृते· मनोहरं दृश्यं कस्य सचेतसो न मोहयति। प्रकृतेः सम्भोगशृंगारस्य क्रीडा तत्र दृश्यते यत्र वल्ली स्वं प्रियतमं तरुं प्रफुल्लिता सति आलिङ्गयति।[2]

वारुणीदिशानायिकामुपभोक्तुं गते सूर्ये तत्रानुरक्ता सन्ध्या सखी-प्रियतमन्वेष्टु चन्द्ररूपं दीपं प्रज्वालयन्ती भ्रमति।[3] हृदयस्पर्शीदृश्य प्रस्तुवता कविना प्रकृतिविरहिणीनायिकारूपेण वर्णयता प्रोच्यते यत् स्वपत्यौ सूर्येऽस्तं गते पद्मिनी वियोगमत्यन्तमनुभवन्ती भ्रमरव्याजेना-श्रुकणान् विमुञ्चति।[4]

एव कविपतेः लेखनीत. प्रकृतिचित्रणस्यैकविचित्रमौलिकरूप निःसृतमस्ति। कवि. रजनी गर्भवतीनारीरूपेण वर्णयति या नवोदित बालमरुण स्वकीये गर्भे धृतवती। येन गर्भिणी स्त्री सदृशमेवरात्रेश्चन्द्र-रूपं मुख म्लान सत् पीत जातमस्ति तथा तदङ्गेषु विरलानि नक्षत्र-रूपाणि भूषणानि अवशिष्टानि सन्ति।[5]

---

१. श्वेताम्बरा रसितहंसगतिप्रसन्ना शृंगारहारकुसुमोत्करकाम्यकान्ति।
उल्लासितस्वसमयाश्रितबन्धुजीवा वाग्देवतेव समुदेति मुदे शरन्न·॥
( पा० ह० म० १०।१२ )

२. प्रियमिव तरुजात मस्वजे वल्लिमाला, नवदलपुलकेवान्निद्रपुष्पा सकामम्।
प्रतिमिथुनमभेदप्रेमसाक्षेपरूपो निरुपधिसहचार. सर्वसाधारणोऽभूत्॥
( पा० ह० म० २१।२८ )

३. गतवति निभृतान्तर्वारुणी भोक्तुकामे भगवति दिननाथे किं तमन्वेष्टुकामा।
तदनु तदनुरक्ताऽन्वेत्य सन्ध्या सखीय विचिचरिषतिस भाष्यामृतांशुप्रदीपम्॥
( पा० ह० म० १३।१८ )

४. उत निपतति वार्धौ पद्मिनीपद्मबन्धौ परमविरहसादासादिनीमुञ्चतीव।
मुखमुकुलविबन्धोद्भ्रान्तनिर्याणलोलभ्रमरकपटकायानञ्जनाक्ताश्रुबिन्दून्॥
( पा० ह० म० १३।१३ )

५. परिपाण्डुरचन्दिरानना विरलोडुव्रजभूषणाप्यसौ।
शिशुभानुभृतान्तराभृशं भृतगर्भेव विभावरी बभौ॥
( पा० ह० म० २।४ )

एव सन्ध्यावर्णनप्रस्तावे कविवरोऽद्भुताया प्रतिभाया उपयोग कृतवानस्ति । यथा—

**समुदयति शशाङ्के प्रागयं व्योम्नि रागो,**
**दिननिगमविलम्बिन्यर्कविम्बे परस्तात् ।**
**मणिमयपुटभाण्डोन्मुद्रखण्डद्वयान्त**
**प्रसरति रतिभूषाभूतसिन्दूरपूर. ॥**
( पा० ह० म० १३।२ )

एव प्रकारेणास्मिन् महाकाव्ये प्रकृते विविधाना रूपाणा महत्स्वाभाविकं प्रभावशालिचित्रणं परिलक्ष्यते । यत् प्रकृतिप्रेमासिक्तां कविपते: चित्तवृत्ति स्पष्टं प्रकटयति ।

**कलापक्षः**

कस्मिश्चित् काव्ये रसभावाभ्या सहैव कलापक्षस्यास्तित्वमपि अत्यावश्यकमस्ति, यतोहि तत्रैव कवे वैदुष्यं चित्तवृत्ते. परिचयश्च प्राप्यते, वर्णनयोजनाया सौष्टवं वा दरीदृश्यते । कलाया विविधेपु रूपेषु अलकारचयन-भापाशैली-छन्दोयोजनादीना भवति समावेशः । एतैरेव महाकाव्य मधुर मनोहर सुन्दर च सत् मनीपिणा हृदयानि समाकर्षति । दृष्ट्यानया विचारे क्रियमाणे पारिजातहरणमहाकाव्यस्य प्रणेता कविवरो द्विवेदीमहाभाग पूर्णत. साफल्यमवाप्तवानस्ति । महाकाव्यस्य विभिन्नेषु तत्त्वेषु विशिष्टवैदुष्यस्य प्रदर्शनेऽपि काव्यकलापक्षेऽपि कवेरस्यमहानधिकार. परिलक्ष्यते । काव्येऽत्र कलाया विभिन्नानां तत्त्वाना संक्षिप्तपरिचयोऽध. प्रस्तूयते ।

**भाषाशैली**

महाकाव्यस्य कृते भाषायाश्चयनमप्यत्यावश्यकं भवति । कवे: हृदयानुभूति पाठकानामन्त करणे समुपस्थापयितु भाषैव सहायिका भवति । अतएव सर्वै कविभि. भाषाया विशिष्ट ध्यानं दीयते । अस्य काव्यस्य भावपूर्णाभाषा सरला सरसा प्रसादमाधुर्यगुणमयी च विद्यते । भावगम्भीरताया भाषासौष्टवस्य च समन्वयोऽस्य महाकाव्यस्य वैशिष्ट्य वर्तते । अत्र कर्णकटूना शब्दाना सर्वथाऽस्ति अभावः । स्थले स्थले भाषाचित्रोपमता दृश्यते । अनेकेषामाधुनिक-

तत्समानां शब्दानां प्रयोगो दृश्यते । निरर्थकशब्दानां प्रयोगः क्वचन न दृश्यते । व्याकरणनियमानामतिक्रमणं क्वचिदपि नाभिलक्ष्यीभवति । कियतां शब्दाना प्रयोगः सर्वथा मौलिकोऽस्ति । यथा फारसीभाषाया 'दरवार'-शब्दस्य संस्कृतशब्दरूपे प्रयोगो दृश्यते । 'मोटर'-शब्दस्य कृते 'मृत्तर'-शब्दोऽस्ति प्रयुक्तः । अस्य महाकाव्यस्य भाषाया माधुर्येण सह प्रसादगुणस्यापि प्रयोगोऽवलोक्यते । प्रेमवर्णनप्रसङ्गे सुगमकोमलभाषायाः प्रयोग. प्राप्यते । युद्धावसरे वर्णनानुकूला ओजस्विनी भाषा प्रयुक्तास्ति ।

महाकाव्ये हि कदापि कविः कामप्येकामेव शैलीमादाय न प्रचलति, अपितु विषयानुसार शैलीपरिवर्तन करोत्येव । एवमत्रकाव्ये कविपनिनामपि विभिन्नाना शैलीना प्रयोग· कृतोऽस्ति । यत्र प्रमुखे द्वे शैल्यौ स्त । एका वैदर्भी शैली या समासरहितापि सरलास्ति । द्वितीया गौडीया दीर्घसमासबहुला क्लिष्टा ओजस्विनी च वर्तते । सहैवास्य शैलीविभिन्नै लौकिकैर्न्यायै· सूक्तिभिश्च परिपूर्णा परिलक्ष्यते । अनेकानि सूक्तिरत्नानि काव्येऽत्र लक्ष्यन्ते । माघ-श्रीहर्षशैलीमध्यमार्गत. प्रचलन्ती कवेरस्य शैली स्वतन्त्रास्ति । क्वचन कालिदासस्य शैल्या प्रभाविता कवेरस्य शैली पाठकाना मनासि विनोदयति । फलत. सस्कृतवाङ्मयेऽति विख्यातानामेषा त्रयाणा विशिष्टाना महाकवीना परिशीलितशैलीदर्शनमत्रकाव्ये जायते । अस्य काव्यस्य शैली दर्शनव्याकरणादिदुरुहविषयाणामपि काव्यमाध्यमेन स्पष्टं कर्तु सर्वथास्ति समर्था । तथैव स्वाभाविकै अलकारै. छन्दोयोजनाभिश्च सयुक्तासती रमणीयता वहति ।

### अलंकार-चयनम्

काव्येऽलकाराणा प्रयोग. कलापक्षस्य सौन्दर्यवर्द्धयन् काव्यात्मनो रसभावस्योत्कर्षवर्द्धने सहायको भवति । प्रस्तुते महाकाव्ये शब्दालङ्कारार्थालङ्कारयोः प्रयोगः स्वाभाविकरूपेण जातोऽस्ति । एवमत्र अलंकाराणा योजना काव्यसौन्दर्यस्य समृद्धिकरीसिध्यति । शब्दालङ्कारेषु अनुप्रासस्य प्रयोगो दर्शनीयोऽस्ति । अलकारस्यास्य प्रयोगस्तु प्रायः प्रतिश्लोक जातोऽस्ति । यमकालकारस्य छटा तु तृतीये सर्गे विशिष्टं चेतसश्चमत्कारमापादयति । क्वचित्

शब्दश्लेषस्य प्रयोगो मनोविनोदयति। क्वचन चार्थश्लेषो हृदयमावर्जयति। अर्थालंकारेषु उपमोत्प्रेक्षारूपकश्लेषालङ्कारातिशयोऽतिशयतामावहति। अतिशयोक्तिप्रयोगोऽपि स्वाभाविकरूपेण कृतोऽस्ति। क्वचन कविना सर्वथा लौकीकीमुपमा प्रस्तुवता पूर्णस्य स्ववैदुष्यस्य परिचयः प्रदत्तो विद्यते।[1] उत्प्रेक्षालकारः कवेरधिकः प्रियः प्रतीयते। यस्य दिग्दर्शनं प्रथमे सर्गे द्वारिकावर्णनप्रसङ्गे एव भवति[2]। सम्वादेषु अर्थान्तरन्यासस्यापि प्रयोगेऽत्रि रमणीयः प्रतिभाति।

**छन्दोयोजना**

महाकाव्यलक्षणानुसारं प्रतिसर्गं कस्यचिदेकस्यैव छन्दसः प्रयोगः समुचितः तथा सर्गान्ते छन्दः परिवर्तनमत्यावश्यकमस्ति। नियमस्यास्य पालनं कविपतिनाऽत्र महाकाव्ये सम्यक् कृतं विद्यते। समस्ते काव्ये विविधानां वृत्तानां प्रयोगो विलोक्यते। प्रथमसर्गस्यारम्भो वंशस्थेन वृत्तेन, द्वितीयस्य सर्गस्यारम्भः सुन्दरीछन्दसा, तृतीयस्य सर्गस्य प्रारम्भो द्रुतविलम्बेन वृत्तेन, चतुर्थस्य सर्गस्य प्रारम्भोऽनुष्टुप्छन्दसा, पञ्चमस्योपजातिना, षष्ठस्य वसन्ततिलकया जातोऽस्ति। एवं विभिन्नेषु सर्गेषु विभिन्नानां छन्दसां योजना कृता वर्तते। एतदतिरिक्तं महाकाव्येऽत्राभिनवया दृष्ट्या दोहा, सवैया, कवित्तादीनां हिन्दीछन्दसामपि प्रयोगः कविपतिना कृतो विद्यते। महाकाव्ये एवम्विधः कश्चनैकः सर्गो भवति यत्र कविः स्वेच्छया विविधानां छन्दसां प्रयोगं विधत्ते। अतोऽनया प्राचीनपरम्परया कविपतिनापि

---

१. पुरीह सूत्रादिविशेषवृत्तिमद्विधाविशेषैर्ननु शाब्दिका यथा।
प्रकल्पयन्ति प्रकला पटादिकाननेकरूपानपि कारवोऽनिशम्॥
(पा० हु० म० १।२५)

२. जगत्कलाकौशलसारशालिनो मणिव्रजावासिततोरणस्रजाम्।
इयं रुचीनां निचयैर्यथाश्रियाऽभ्युपैति नीराजनमन्तिके पुरी॥
(पा० हु० म० १।९)

एतदर्थं पञ्चदशनिश्रितोऽस्ति। तत्र 'सवैया' छन्दसः[1] 'दोहा' छन्दसश्च प्रयोगो दृश्यते[2]।

### पारिजातहरणस्य महाकाव्यत्वम्

प्रस्तुतमहाकाव्यस्य प्रकृतायां समीक्षायां संस्कृतकाव्यजगतिवर्णिते महाकाव्यलक्षणे च दृष्टौ दीयमानायां स्पष्टतः प्रतीयते यत् कविपतिना महाकाव्यलक्षणानां पूर्णतोऽनुसरणंकृतमस्ति। महाकाव्यलक्षणानुसारमस्मिन् महाकाव्ये एकविंशतिसर्गा सन्ति। अस्य कथानकं पुराणेतिहासप्रसिद्धं अस्ति तथा नायकश्च भगवान् श्रीकृष्णः उच्चकुलोद्भवः क्षत्रियो देवश्चास्ति। महाकाव्यशैल्यानुसारं मध्ये मध्ये विविधानि वर्णनानि सन्ति। तत्र प्रथमे द्वारिका-वर्णनम्, द्वितीये प्रभात-वर्णनम्, चतुर्थे समुद्र-वर्णनम्, पञ्चमे त्रिवेणी-वर्णनम्। दशमे शरद्-वर्णनम्, पञ्चदशे नन्दनवन-वर्णनम्, एकविंशे च सर्गे वसन्त-वर्णनं महदुत्कृष्टमस्ति। प्राकृतिकस्य वर्णनस्यापि समुचितो निर्वाहः कृतो वर्तते। शृंगार-वीर-शान्तादिरसानां पूर्णं चित्रमत्रकाव्ये परिलक्ष्यते, यत्र शृंगाररसस्यैवास्ति प्रामुख्यम्। चरित्रचित्रणञ्चात्रात्यन्तंसजीवमस्ति। अत्र भौमासुरस्य निन्दा रुक्मिण्याश्च प्रशंसा कृता विद्यते। विविधछन्दसां योजना दर्शनीयास्ति। सर्गान्तेऽन्तिमाश्लोका परिवर्तितछन्दःसु एव निबद्धाः सन्ति। यत्रोत्तरसर्गाणां कथासङ्केतो जायते। अलंकाराणां योजनापि समीचीनास्ति।

सर्गा न महान्तो नापि लघीयांसः सन्ति। महाकाव्यस्य नामकरणमित्तवृत्तस्याधारेणैव कृतं विद्यते। कथाया मूलाधारस्य पारि-

---

१. सुन्दरमायतनं हि पुरन्दरदम्पतिस्वैरविलासरतीनाम्।
नन्दनमाकरित हरिचन्दनमुख्यसुरद्रुसुरव्रततीनाम्।
इन्दुकरैररविन्दुमुखीश्रितमिन्दिरधामपदसुगतीनाम्।
पश्य न कस्य मनो हरते कुरुते तव नापि मुद किमहीनाम्॥
(पा० ह० म० १५।४९)

२. ऋतवोऽमी धृतदिव्यशरीराः प्रेरितपावनरम्यशरीराः।
देववनीमनिशं सेवन्ते क्वाप्यनुभूतिरभूदेव ते॥
(पा० ह० म० १५।५७)

जातवृक्षस्यापहरणकारणादेवास्य काव्यस्य नाम पारिजातहरणमस्ति। तथाचास्मिन् महाकाव्ये सम्यग् रससञ्चारः गौडी वैदर्भ्यो रीत्योः समाहारः समुचिताः शब्दविन्यासा उदारा अलङ्कारा अभिनवाभावा- रुचिरतरा सम्वादसन्दर्भाः विद्वन्मनोमोदिनीविचित्राशैली उत्तमा उपदेशाश्च केषा काव्यकलाकुशलाना सहृदयहृदयाणा मनांसि न मोदयन्ति। सर्वथा प्रतिवद्धप्रसरस्य अद्भुतप्रतिभाशालिनो महाकवेः श्रीमत कविपतेः गृहस्थधर्मवर्णनप्रस्तावे भगवदुक्तमिदमुपदेशात्मकं- पद्यद्वयं सदा स्मरणीयमस्ति।

**यत्तु सन्तोऽनुगृह्णन्ति यश्च गृह्णाति सत्तमान्।**
**तद्गृहं तद्गृहं मेऽथ न गृहं स्वाश्रयास्पदम्॥**
**ये गृहाश्रमसौख्यानि स्वयमेवोपभुञ्जते।**
**लोकोपकारिसंस्थायाः ते सर्वस्वहृतोऽविन.॥**

(पा. हृ. म. ४।१२-१४)

एवं संस्कृतमहाकाव्यलक्षणनिकषायामिदमेकं सफलं महाकाव्यमस्ति। तथा आधुनिककाव्यशास्त्रीयलक्षणानुसारमपि अस्य महाकाव्यत्वमविचलमस्ति। वस्तुतः कविपतिना एतन्महाकाव्यरूपेण संस्कृतजगते एकमनुपमं शुभ्रं रत्न प्रदाय महत् प्रशंसनीयं कार्यं कृतमस्ति।

# उपपुराणादीनां पर्यालोचनम्

**श्रीकृष्णमणित्रिपाठी**

भारतीयेतिहास-राजनीतिक-धार्मिक-सामाजिकपरम्पराणां परिज्ञानाय पुराणानामनुशीलनं परमावश्यकमस्ति।

भारतीय ज्ञान-विज्ञानयोरध्ययननिमित्तं वेदब्राह्मणारण्यकोपनिषदां यावन्महत्त्वं विद्यते तावदेव पुराणानामपि वर्तते। मानवसमाजस्येतिहासः तावत्पर्यन्तमपूर्णो विद्यते यावत्सृष्टेरारम्भतो वर्तमानकालपर्यन्तं तस्य क्रमबद्धरूपेण सम्बन्धो न भवेत्। पुराणपञ्चलक्षणे सृष्टिमारभ्य प्रलयं यावदितिवृत्तं मध्यकालीनमन्वन्तराणां राजवंशस्योत्थानपतनयोश्चित्रणम् ऋषीणां मुनीनाञ्च चरितं सामाजिकरीतेश्च वर्णनमुपलभ्यते।

पुराणेषु न केवलं धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानामुपदेशैः सम्बलितमाख्यानमेवाङ्कितमस्ति, अपितु तेषु समाजशास्त्रीयसिद्धान्ता अपि पूर्णरूपेण चित्रिताः सन्ति। अत इतिहास-समाजसंस्कृतीनां सम्यग्ज्ञानाय पुराणानामुपयोगिता सर्वाधिका विद्यते। वस्तुतः पुराणेषु साहित्य-कला-धर्म-दर्शन-इतिहास-भूगोलादिविभिन्नविषयकसामग्रीणां संकलनमस्ति। एषां विषयाणां पौराणिकं विवेचनं भारतीयेतिहासस्य नवनिर्माणायात्यन्तमुपादेयमुपयोगि च विद्यते। पुराणेषु चिन्तन-मननानुशीलनपूर्वकं भारतीयसंस्कृतेः पूर्णं चित्रणं विद्यते। अतो मानवसभ्यतासंस्कृत्योर्वास्तविकरहस्यज्ञानाय पुराणानामध्ययनं नितान्तमावश्यकम्।

अष्टादशमहापुराणवद् अष्टादशसंख्याकानि उपपुराणानि, औपपुराणानि च विद्यन्ते; येषां निर्माणं महापुराणानामाधारे जातमस्ति। प्राक्तनैर्विभिन्नैर्मुनिभिरेवाष्टादशानां महापुराणानां छायामाश्रित्य उपपुराणानामौपपुराणानाञ्च रचना कृतास्ति।

विस्तारभिया उपपुराणेषु औपपुराणेषु च क्वचन महापुराणानां कथाः सूक्ष्मीकृताः, कुत्रचित् परित्यक्ताः, कुत्रचिच्चमत्कारानयनाय विलक्षणाना कथानां समावेशोऽपि कृतोऽस्ति, क्वचन चाभिनवतानि-

वेशाय कथासु किञ्चित् परिवर्तनमपि कृत विद्यते। एवं वैशिष्टचे जातेऽपि उपपुराणानि महापुराणवदेवादरणीयानि, स्पृहणीयानि, मान्यानि श्रद्धेयानि च सन्ति। यतस्तानि तत्तन्महापुराणेभ्य एव तत्तन्मुनिभिः प्रणीतानि सन्ति, यस्य संकेतो विभिन्नेषु पुराणेषूपलभ्यते। तद्यथा—

**अष्टादशभ्यस्तु पृथक् पुराणं यत्प्रदृश्यते।**
**विजानीध्वं द्विजश्रेष्ठास्तत्तथाभ्यो विनिर्गतम्॥**

(मत्स्य पु० ५३।६३)

एव महापुराणानां परिचयप्रसङ्गे विष्णुपुराणेऽप्युल्लिखितं विद्यते यद् अष्टादशभ्यो महापुराणेभ्योऽतिरिक्तानि यानि पुराणानि समुपलभ्यन्ते तानि विभिन्नैर्मुनिभिः कृतानि ज्ञेयानि—

**महापुराणान्येतानि ह्यष्टादश महामुने।**
**तथाचोपपुराणानि मुनिभिः कथितानि च॥**

(विष्णुपुराणे ३।६।२४)

इत्थं महापुराणेभ्यः पृथक् यानि पुराणानि प्राप्यन्ते तानि तेभ्य एव निर्गतानि मन्तव्यानि। अत उपपुराणाना स्रोतांसि महापुराणानि एव सन्तीत्यत्र न काचिदस्ति सशीतिः। अत एव च तुल्यन्यायेन महापुराणानामिवोपपुराणानामपि प्रामाण्यमङ्गीक्रियते विद्वद्भिः। तथात्रोक्तम्—

**अन्याश्च संहिताः सर्वा मरीचिकपिलादयः।**
**सर्वत्र धर्मकथने तुल्यसामर्थ्यमुच्यते॥**

(चित्रसूत्रे १५)

स्कन्दपुराणानुसारं तूपपुराणानि साक्षाद् ब्रह्मणैव प्रोक्तानि सन्ति—

**तथैवोपपुराणानि यानि चोक्तानि वेधसा।**

(रेवाखण्डे १।४५)

**उपपुराण-संख्या**

कियन्तो विपश्चितो निश्चिन्वन्ति यद् यथा महापुराणाना संख्या अष्टादश नियताः सन्ति तथैवोपपुराणाना संख्या निश्चिता नास्ति। यतो हि अष्टादशभ्य उपपुराणेभ्योऽपि अतिरिक्तानि पुराणानि *समुप-

लभ्यन्ते। अत उपपुराणानां संख्या अस्ति असंख्याता, किन्तु मतमेतन्नास्ति संगतम्, यतो हि महापुराणानामिव उपपुराणानामपि संख्या नियता एव सन्ति अष्टादश। अतोऽष्टादशमहापुराणवद् अष्टादशानि उपपुराणानि अपि निभाल्यन्ते पुराणेषु। एवञ्च यथा अष्टादशमहापुराणानि विद्यन्ते तथैवाष्टादशसंख्याकानि उपपुराणान्यपीति निर्विवादम्। तथाचोक्तं ब्रह्मवैवर्ते—

**अष्टादशपुराणानामेवमेवं विदुर्बुधाः।**
**एवञ्चोपपुराणानामष्टादश प्रकीर्तिताः॥**

(श्रीकृष्ण-जन्मखण्डे १३१।२२)

स्कन्दपुराणेऽपि उपपुराणानां गणनाप्रसङ्गे तानि अष्टादशसंख्याकान्येव प्रोक्तानि सन्ति—

**पाराशरं भागवतं कौर्मञ्चाष्टादशं क्रमात्।**

( रेवाखण्डे १।५८ )

प्रतिमहापुराणमेकैकमुपपुराणं प्रादुर्भूतं विद्यते, अतएव महापुराणवदुपपुराणान्यपि अष्टादशैव सन्ति। यथा—

महापुराणानि हिन्दुजातेर्जीवनस्यास्ति प्रमुख आधारः तथैवोपपुराणान्यपि प्राचिनभारतीयगौरवचिन्तनस्य विकासे सर्वोपकारिण्या अनन्यसाधारणाया भारतीयसंस्कृतेः प्रसारे ऐतिहासिकतत्त्वस्य प्रकाशे, धार्मिकव्यवस्थायाः प्रचारे वर्णाश्रमव्यवस्थायाः संरक्षणे च महद् उपकारकाणि विद्यन्ते। अतस्तान्यपि महापुराणवत् प्राचीनानि प्रामाणिकानि श्रद्धेयास्पदानि चाभिमतानि सन्ति। मत्स्यपुराणानुसारमुपपुराणानि महापुराणाना सन्ति उपभेदाः न तानि सन्ति स्वतन्त्रग्रन्थरूपाणि। तथाहि—

**उपभेदान् प्रवक्ष्यामि लोके ये सम्प्रतिष्ठिताः॥**

( मत्स्यपु० ५३।५९ )

परन्तु अनेके गवेषका विद्वासो महापुराणवदुपपुराणान्यपि स्वतन्त्रग्रन्थरूपाणि मन्यन्ते। अतएव धर्मशास्त्रनिबन्धकारैः तानि स्वतन्त्रग्रन्थान् मत्वा स्वस्वनिबन्धग्रन्थेषु महता समादरेण तेषां वचनानि समुद्धृतानि सन्ति। उपपुराणानां वर्णनपद्धतौ चमत्काराय महान् प्रयासो विहितो विद्यते, येनाभासो भवति यदि-

मानि नातिप्राचीनानि सन्ति, अपिच महापुराणेषु अनुक्ता अपि बहवो विषया उपपुराणेषु महत्या रोचकशैल्या उल्लिखिताः सन्ति येषामनुशीलनेन तदध्ययने उत्तरोत्तरमुत्कण्ठा वर्द्धते। एवं सत्यपि आस्तिकजगति लोकप्रियतया महापुराणानां यादृगस्ति समादरो न तादृगुपपुराणानाम्। किञ्च यथा पुराणशब्दश्रवणसमकालमेव महापुराणानां सहसा स्मरणमुपजायते न तथोपपुराणाना स्मृतिर्जायते। तथापि तानि महापुराणवन्मान्यानि गण्यानि च सन्ति, यतो हि उपपुराणानामपि उद्देश्यं तदेवास्ति यन्महापुराणानामस्ति।

**उपपुराणनामानि**

(१) आदिपुराणम्, (२) नरसिंहपुराणम्, (३) स्कान्दपुराणम्, (४) शिवधर्मपुराणम्, (५) दुर्वासःपुराणम्, (६) नारदीयपुराणम्, (७) कपिलपुराणम्, (८) वामनपुराणम्, (९) औशनसपुराणम्, (१०) ब्रह्माण्डपुराणम्, (११) वरुणपुराणम्, (१२) कालिकापुराणम्, (१३) माहेश्वरपुराणम्, (१४) शाम्बपुराणम्, (१५) सौरपुराणम्, (१६) पराशरपुराणम्, (१७) मरीचिपुराणम्, (१८) भास्करपुराणञ्चेत्येतानि सन्ति अष्टादशमहापुराणेभ्यो निर्गतानि अष्टादशोपपुराणानि। तथाहि—

**आद्यं सनत्कुमारोक्तं नारसिंहमथापरम्।**
**तृतीयं स्कान्दमुद्दिष्टं कुमारेण च भाषितम्॥**
**चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्।**
**दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम्॥**
**कपिलं वामनं चैव तथैवोशनसेरितम्।**
**ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च॥**
**माहेश्वरं तथा शाम्बं सौरं सर्वार्थसंचयम्।**
**पराशरोक्तमपरं मारीचं भास्कराह्वयम्॥**

( कूर्मपुराणस्य पूर्वार्द्धे १।१७-२० )

एवमेव किञ्चिच्छब्दान्तरेण नामान्तरेण च देवीभागवते—(३।१३।१६), स्कन्दपुराणस्य रेवाखण्डे (१।४८।५२), मत्स्यपुराणे (५३।५७-६२), गरुडपुराणे च (२१५।१७-२०) अष्टादशानामुपपुराणानां स्पष्टमुल्लेखो विद्यते।

यथा वायुपुराण-शिवपुराण-भागवतातिरिक्तानां महापुराणाना नामविषये सर्वेषा पुराणानामैक्यमतमस्ति न तथोपपुराणाना नामसम्बन्धे पुराणाना मतैक्यमुपलभ्यते। तत्तत्पुराणेषूपपुराणाना नामानि भिन्नानि भिन्नानि समवाप्यन्ते। केवल हि द्वादशानाम्—आदिपुराण-नरसिंहपुराण दुर्वास पुराण-नारदीयपुराण-कपिलपुराण-औशनसपुराण-वरुणपुराण - कालिकापुराण-माहेश्वरपुराण-शाम्बपुराण-सौरपुराण-पराशरोपपुराणाना नामानि कूर्म-स्कन्द-गरुड-देवीभागवतपुराणेषु समानानि मिलन्ति, किन्तु शिष्टाना षण्णामुपपुराणाना नामानि विभिन्नानि उपलभ्यन्ते।

अपि च मत्स्यपुराणे चतुर्णां नरसिंहपुराण-नन्दीपुराण-साम्बपुराण-आदित्यपुराणानामेव नामान्युपलभ्यन्ते। तथाहि—

**पाद्मे पुराणे तत्रोक्तं नारसिंहोपवर्णनम्।**
**तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते॥**
**नन्दाया यत्र माहात्म्यं कार्तिकेयेन वर्ण्यते।**
**नन्दीपुराणं तल्लोकैराख्यातमिति कीर्त्यते॥**
**यत्र शाम्बं पुरस्कृत्य भविष्येऽपि कथानकम्।**
**प्रोच्यते तत्पुनर्लोके साम्बमेतन्मुनिव्रताः॥**
**एवमादित्यसंज्ञा च तत्रैव परिगीयते।**

( मत्स्यपुराणे ५३।५९-६२ )

**औपपुराणानि**

यथाष्टादशमहापुराणानि अष्टादशोपपुराणानि च सन्ति तथैवाष्टादशौपपुराणान्यपि विद्यन्ते। तथाहि—

(१) सनत्कुमारपुराणम्, (२) बृहन्नारदीयपुराणम्, (३) आदित्यपुराणम्, (४) सूर्यपुराणम्, (५) नन्दिकेश्वरपुराणम्, (६) कौर्मपुराणम्, (७) भागवतपुराणम्, (८) वसिष्ठपुराणम्, (९) भार्गवपुराणम्, (१०) मुद्गलपुराणम्, (११) कल्किपुराणम्, (१२) देवीपुराणम्, (१३) महाभागवतपुराणम्, (१४) बृहद्धर्मपुराणम्, (१५) परानन्दपुराणम्, (१६) वह्निपुराणम्, (१७) पशुपतिपुराणम्, (१८) हरिवंशपुराणञ्च। यदुक्तम्—

आद्यं सनत्कुमारं च नारदीयं बृहच्च यत् ।
आदित्यं भानवं प्रोक्तं नन्दिकेश्वरमेव च ॥
कौर्मं भागवतं ज्ञेयं वासिष्ठं भार्गवं तथा ।
मुद्गलं कल्किदेव्यौ च महाभागवतं ततः ॥
बृहद्धर्मं परानन्दं वह्निं पशुपतिं तथा ।
हरिवंशं ततो ज्ञेयमिदमौपपुराणकम् ॥

( बृहद्विवेके ३ )

एवं श्रीस्वामिना ज्ञानानन्दसरस्वतीमहोदयेन स्वकीये धर्मकल्पद्रुमे अष्टादशानामुपोपपुराणानामपि सकेत कृतोऽस्ति । तथा चैवविध भेदमजानानाः केचन महापुराणेतराणा सर्वेषामुपपुराणत्वेन गणना विधाय सर्वाणि उपपुराणेष्वेवान्तर्भावयन्ति । तेषा मते असख्यानि सन्ति उपपुराणानि ।

**शैवादिभेदाः**

यथा महापुराणेषु सौर-शैव-शाक्त-वैष्णवादिभेदा वर्तन्ते तथैवोपपुराणेष्वपि सौर-शैव-शाक्त-वैष्णव-गाणपत्यादिभेदा अपि विद्यन्ते । यथा—सूर्यपुराणम्, शाम्बपुराणम्, भास्करपुराणम्, आदित्यपुराणम्, वह्निपुराणम्, सौरपुराणम्, सौरधर्मोत्तरपुराणञ्च सौरोपपुराणेषु परिगण्यन्ते । शाक्तोपपुराणेषु—कालिकापुराणम्, देवीपुराणम्, महाभागवतम्, नन्दीपुराणम्, बृहन्नन्दिकेश्वरपुराणम्, शारदापुराणञ्च वर्तन्ते । शिवधर्मपुराणम्, माहेश्वरपुराणम्, पशुपतिपुराणम्, स्कन्दपुराणञ्च शैवोपपुराणेषु स्वीक्रियन्ते । वैष्णवोपपुराणेषु—विष्णुधर्मपुराणम्, विष्णुधर्मोत्तरपुराणम्, नरसिंहपुराणम्, नारदीयपुराणम्, बृहन्नारदीयपुराणम्, आदिपुराणम्, कल्किपुराणम्, पराशरपुराणम्, परानन्दपुराणम्, सनत्कुमारपुराणम्, वसिष्ठपुराणम्, मरीचिपुराणम्, वरुणपुराणम्, दुर्वासपुराणम्, औशनसपुराणम्, हरिवशपुराणञ्च विद्यन्ते । गाणपत्योपपुराणेषु तु द्वयोरेव (१) मुद्गल- (२) गणेशपुराणयोर्गणाना भवति ।

**कालनिर्णयः**

उपपुराणानां रचनाकालविषये विपश्चितां महानस्ति मतभेदः । बहूना विदुषां विश्वासो विद्यते यदुपपुराणानि प्राचीनानि न सन्ति,

किन्तु निर्विवादमुपपुराणानि अतिप्राचीनकालत एव महापुराणेभ्यः तत्तन्मुनिभि. सगृहीतानि सन्ति ।

वेदाना मर्मज्ञेन मनीषिणा षड्गुरुशिष्येण स्वकीये वेदार्थनिर्णय-नामके ग्रन्थे नरसिंहोपपुराणस्य कियन्त श्लोका उद्धृता सन्ति । ऐतिहासिकनिर्णयानुसार षड्गुरुशिष्यस्य प्रादुर्भाव एकादशशताब्द्या जातमासीत् । इतोऽपि पूर्वं १०३० ईशवीये वर्षे भारतभ्रमणार्थमा-गत्याल्वेरुणि. अत्रत्याना विदुषा साहाय्येन विशेष ज्ञान सम्प्राप्य भारतभ्रमणविषयकमेकं ग्रन्थं लिखितवान् । तस्य द्वादशे परिच्छेदे तेन पुराणानां विवरण प्रस्तुवता पञ्चाना सोम-शाम्ब-नन्दा-आदित्य-नरसिंहादिपुराणाना नामोल्लेख· कृतो वर्तते । एतेन स्पष्ट प्रतीयते यत्तस्मिन् समये एषामुपपुराणानामपि विद्वद्वर्गे विशिष्टः समादरो जात आसीत् । अतो दशमशताब्दीपर्यन्तमुपपुराणाना निर्माणे न काप्य-नुपपत्तिः सम्भवति ।

विण्टरनित्स-मतानुसार तूपपुराणाना रचनाकाल· षष्ठशताब्दीतो दशमशताब्दी यावदेव भवितुमर्हति ।[1] डॉ० बयुलारमतेन पञ्चम-शताब्द्या उत्तरकाल एवोपपुराणाना निर्माणकालः समुचितः प्रतिभाति ।[2]

किन्तु डॉ० आर० सी० हाजरामहोदय. उपपुराणाना रचना-कालम् ई० पू० ५०० वर्षेभ्य पूर्वमेव मनुते ।[3] एवमुपपुराणाना रचनाकालसम्बन्धे विभिन्नाना विदुषा विभिन्नानि मतानि विद्यन्ते । तत्र युक्तायुक्तत्व समालोचकमनीषिभिः स्वयमेव समूहनीयम् ।

### उपपुराणानां वैशिष्टयम्

उपपुराणेषु प्राय. एकैक कमपि देवविशेषमुद्दिश्य तन्माहात्म्य विशदतया विवृत विद्यते । यद्यपि महापुराणेष्वपीय प्रक्रिया प्राप्यते यथा शैवपुराणेषु भगवतः शिवस्य, वैष्णवपुराणेषु भगवत. विष्णोः,

---

१. हिस्ट्री आफ इण्डियन लिटरेचर, पृ० ८०.

२. इण्डियन इण्टिक्वेरी वा० १९, पृ० ४०८.

३. स्टडीज इन दि उपपुराणाज वाल्० १, पृ० २१२.

शाक्तपुराणेषु च भगवत्याः शक्त्या एव माहात्म्यातिशयः सूचितो वर्तते तथैव उपपुराणेषु इयं सरणिः विशेषतोऽनुसृताऽस्ति ।

स्थावरजङ्गमात्मकस्य जगतो यन्मूलभूतमेकं निर्गुणं परं ब्रह्मैव प्राधान्येन उपास्यं विवक्षितं तन्न स्वरूपतः सम्भवति, तस्य **"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"**, **"यन्मनसा न मनुते"** इत्यादिभिः वाङ्मनसयोरविषयतायाः स्पष्टमुद्घोषितत्वात् । अतस्तस्मिन् मनोनिवेशः तदुपासनमिति नियमात्, मनो वाग्विषयावगाहनस्यासंभवे तत्र न मनोनिवेशः कर्तुं शक्य., नापि तस्य वचसा स्तुतिः सम्भवति । अस्माद्धेतोः पुराणानुसारं सगुण-साकार-रूपाणि आधारीकृत्य तस्मिन् मनो निवेश्यमिति साधीयानस्ति मार्गः ।

तानि च सगुण-साकाररूपाणि अधिकारिभेदात् मुख्यतया पञ्चविधानि तत्तच्छास्त्रेषु पुराणेषु च निरूपितानि सन्ति । यथा सर्वलोकपालको भगवान् विष्णुः, सकलसंहारको भगवान् शिवः, जगज्जननी शक्तिः, विश्वस्यात्मा भगवान् भास्करः, विघ्नविघातको गणपतिश्च । एषु विशिष्टेषु पञ्चसु देवेषु कस्मिंश्चिदेकस्मिन् देवे स्वकीयरुच्यनुसारं ब्रह्मबुद्धिर्विधेया उपासकेन ।

येनाराधकेन यो देवः परब्रह्मतया भाव्यते स एव तद्दृष्टौ सर्वतः प्रधानम्, अन्ये च देवास्तन्मते तदाराध्यदेवानुगामिनो भवन्ति । अनेकेषु देवेषु परब्रह्मतया भावितेषु सम्यगुपासना न भवितुमर्हति, यतो हि, मनस एकाग्रतैवास्ति उपासनाया वास्तविकं फलम्, अनेकत्र च निवेशितं मन एकाग्रं भवितुं नार्हति । तस्माद् बहुत्र मनसः स्थैर्याभावाद् ब्रह्मबुद्धिरेकस्मिन्नेव कस्मिन् देवे कर्तव्या इतरेषु च देवेषु विद्वेषो न विधेयो नापि कस्यावहेलना कार्या ।

परब्रह्मतया भावितो देव एव सर्वतो मुख्य इत्येव पुराणेषूपपुराणेषु च प्रख्यापितम् । अतएवोक्तं भगवता पतञ्जलिनापि स्वकीये योगदर्शने—**"यथाभिमतध्यानाद्वा"** ( २।२४ ) यस्याधिकारिणः स्वभावाद् भवेद् यत्र देवे अभिरुचिः स एव देवः तेन ध्यातव्य इति तदर्थः । तदित्थं विभिन्नतया मनो निवेशार्थं स्वीकृतेषु अनेकेषु देवेषु वैष्णवपुराणेषु भगवान् विष्णुरेव सर्वश्रेष्ठो गण्यते । तदाज्ञयैवान्ये देवा स्वस्वकर्मणि प्रवर्तन्ते । शैवपुराणेषु भगवानाशुतोष एव कर्तुम•

मकर्तुमन्यथाकर्तुं सर्वथास्ति समर्थ इति वर्ण्यते। शाक्तपुराणेषु जगदधिष्ठात्री आद्या शक्तिरेव सर्व विधातु समर्था, तदनुकम्पयैव ब्रह्मविष्णुमहेश्वराः सृष्टिस्थित्युपसंहारकार्येषु प्रभवो भवन्ति। सौरेषु पुराणेषु भगवान् भास्कर एव समस्तस्यास्य विश्वस्यात्मत्वेनाख्यातो जगज्जाल सञ्चालयति। गाणपत्योपपुराणेषु च भगवान् गणपतिरेव परब्रह्मतया ध्यातुमिष्ट। तत्र मुद्गलपुराणे ऋद्धिःसिद्धिश्चेतीमे द्वे गणपतेर्मायात्वेन व्याख्याते स्तः। यदा गजः स्वय शुण्डादण्डं स्वतुण्डे निवेश्य निमीलितनेत्रो भवति तदा मण्डलाकारं तन्मुखमेकरूपं दृश्यते नच तत्रायवभेदः प्रतीयते इति निर्विकल्पकसमाधिसाम्यमभिहितम्। केवल वेद्यविषयाकाराकारैव वृत्तिर्भवतीत्येकदन्तरूपेण तदेव सूचितम्। तद्विग्रहे विभिन्नावयवप्रतीत्या तस्य संसाररूपता प्रस्फुटैव। चतुर्भिर्भुजैश्च चतुर्दिग्व्याप्ति. सूच्यते। गणपतेश्चतुर्षु करेषु चत्वारि पाशाङ्कुशमोदककमलानि चिह्नानि चतुर्विधाना धर्मार्थकाममोक्षाणा सूचकानि सन्ति। तत्रांकुशो धर्मरूपो विद्यते, नियन्त्रित्वेन धर्मस्यांकुशसाजात्येन प्रवृत्तिदर्शनात्। पाशोऽर्थरूपः, अर्थरूपेण पाशेनैव जीवाना विशेषतो बन्धनदर्शनात्। मोदकं कामरूपं तात्कालिकसुखरूपमोदहेतुत्वात्। कमल जले वर्तमानपि न मनाग् जलेन लिप्यते इति मोक्षरूप तद्भगवतो गणपतेर्हस्तस्थित द्योतयति। एवं यथाधिकारमुपासकैः सेवमानो भगवान् गणपतिश्चतुरोऽपि पुरुषार्थान् भक्तेभ्यो नून प्रददातीति सर्वसिद्धिकरत्व तस्य स्पष्टतरमेव। यथा मूषकः पृथिव्या प्रच्छन्न एव निवसति प्रच्छन्न एव बन्धनानि छिनत्ति तथैव ब्रह्मरूपो मूषकवाहनो गणपतिरपि समेषा प्राणिनामन्तर्निगूढो निवसति, प्रच्छन्नः सन्नेव भक्ताना भवबन्धनानि च छिनत्ति, इति भगवतो गणपतेर्मूषकवाहनस्यास्ति रहस्यम्।

गणपतेः शरीरं संसाररूपं, संसारिणां चोदरं दुष्पूरं भवति। बहुतरभोगेऽपि तत्र शान्तेरभावदर्शनात्। अतएव तस्योदरं बहुविस्तृतं दृश्यते। ब्रह्मरूपो गणपतिः संसारिणामुदरं प्रविश्य भुक्तमन्नपानादिकं सर्वं सम्यक् पाचयति—

**अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः।**
**प्राणापानसमायुक्तो पचाम्यन्नं चतुर्विधम्॥**

इति श्रीमद्भगवद्गीतायां गणपत्यभिन्नत्वेन भगवता श्रीकृष्णेनाभिधानात्। तस्मात् परेषामुदरं प्रविश्य भोगकरणात्तस्य महदुदरत्वं ख्याप्यते।

एवं भगवतो गणपतेर्ब्रह्मस्वरूपं तत्र स्थाने स्थाने निरूपितं वर्तते, तथा तत्र तत्र विचित्राभिः कथाभिश्च गणपतेरेव पञ्चसु देवेषु प्राधान्यं प्रख्यापितम्।

अथैकदा विश्वस्यात्मानं सवितारं ध्याननिरतं विलोक्य तद्रथेन सहैव भ्रमद्भिर्बालखिल्यैः—भवान् कमभिध्यायतीति साश्चर्यं पृष्टः स.—गणपतिरस्माकं सर्वेषामधिष्ठाता, स एव परं ब्रह्म तदाज्ञयैव सर्वे वयं तत्तत्कर्मसु प्रवर्तामहे। तमेवाहमभिध्यायामीत्युत्तरितवान्। अनया भगवतः सूर्यस्योक्त्या तत्र गणपतेः परब्रह्मत्वं साधितम्।

एवं गाणपत्योपपुराणेषु गणपत्युपासनया विविधं फलं प्रदर्श्य रामकृष्णयुधिष्ठिरादीनामपि गणपत्युपासनं निर्दिष्टम्। अतो महिम्नः स्तोत्रस्यादौ—

**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥**

इति पुष्पदन्तभणितिनिर्देशात् पुराणोपपुराणौपपुराणानि आश्रित्य स्वरुच्यनुसारं यस्मिन् कस्मिन्नप्येकस्मिन् देवे परब्रह्मबुद्धिं विधाय तदुपासनया आत्मकल्याणं कार्यमिति पुराणविपश्चितां पारमार्थिकः पन्थाः।

## कालिदासस्यादर्शः समाजवादश्च

डा० नन्हेप्रसादद्विवेदः

साहित्यशास्त्रे अनेके वादा सन्ति। किन्तु याथार्थ्येन चित्रण-परिपाट्या वादद्वयमेव सर्वत्र साहित्ये दरीदृश्यते आदर्शवाद. यथार्थ-वादश्च।. तयोर्मध्ये कः श्रेष्ठतरः अस्मिन् विषये विवादस्तु सर्वदा उत्तिष्ठति। केचन साहित्यशास्त्रं **"रामादिवत् प्रवर्तितव्यं न रावणादिवत्"** इत्येतत्कथनमाश्रित्य ब्रुवन्त्येवमादर्शवादस्य श्रेष्ठताम्। आदर्शवादे च लोकहितभावनापि निहिता दृश्यते। धर्मपोषणमधर्मोन्मूलनमनेनैव भवितु शक्यमिति। वादोऽय जगत. आदौ सभ्यावस्थायाः द्योतन करोति। स एव आदर्शवान् भवति यः सभ्यः भवति। सभ्यानामेव आदर्शः भवति। अनेनादर्शेन आगामिसततिपरम्परायाः हित· भवति। या सन्ततिपरम्परा इम स्वपूर्वपुरुषाणामादर्शं परित्यजन्ति सा तु नश्यति, नात्र सदेह कार्य·। अयमेवादर्शः कस्यचिदपि राष्ट्रस्य संस्कृते पोषक. जायते, येन स्वोन्नति विधातु नागरका· सर्वदा यतमाना विलोक्यन्ते। इत्थमादर्शवादस्य पृष्ठपोषका वदन्ति।

अपर. वाद यथार्थवादोऽपि साहित्यशास्त्रे मनोवैज्ञानिकदृष्ट्या विचारणया एव दृश्यते यत् अयमेव वाद. सृष्टिमूले आसीदिति। मौलिकोऽय वाद. प्रतिभाति। इद तु सत्य यत् कवि. यस्मिन्काले यस्मिन्देशे निवसति, तद्देशकालयो. प्रभाव. तदुपरि तथा च तत्काव्योपरि अवश्यमेव भवति। यथार्थवादापेक्षया आदर्शवादस्तु अस्वाभाविक. काल्पनिकः तथा च तत्कालीना जनसमाजगता त्रुटि गोपनार्थं यतते सर्वदा। द्वयोः वादयो. क. प्रथम. अस्मिन्नपि विषये विवाद एव जागर्ति।

अस्माक भारतीयसाहित्ये वेदानां स्थानं मूर्धन्यमस्ति। पाश्चात्याः विद्वासः कथयन्ति यत् नराः प्रथमं तावत् वानराः आसन्नविकसितावस्थायामिति तथा च ते इतस्तत. भ्रमणमेवाकुर्वन्। पर वेदाना मध्ययनेन विदित भवति यत् वेदकालः नराणामविकासावस्था

नासीत्। वेदेषु आदर्शयथार्थयोः संगमः। तत्कालीनामृषीणां ज्ञानदृष्टिः कियती तीक्ष्णासीदस्य मनोहारिचित्रणं वर्तते तत्र। तत्कालीनै आर्यैः यद् दृष्टं तत्तु याथार्थ्यमद्य अस्मभ्यमादर्शमयं प्रतिभाति। यतो हि तत्र अस्माकं हितः निहितः दृश्यते। इत्थं पुरा कवि यथार्थवर्णनप्रसंगेन कदापि आदर्शं न विस्मृतवान् तथा च एवमेव आदर्शवर्णनेन यथार्थवर्णनमपि। "**हितेन सहितम्**" इति तु साहित्योद्देश्यमाश्रित्य आदर्शसृष्टिं करोत्येव कविः। यस्मिन्काव्ये आदर्शसृष्टिः भवति तदेव काव्यं जीवति, जगति तत्प्रणेतुः यशः प्रसरति च।

अस्माकं कविकुलगुरुः कालिदासः कविषु श्रेष्ठः अनेनैव प्रकारेणादर्शसृष्टिं कृतवान् स्वकाव्ये। अस्मादेव हेतोः तस्य काव्यं संस्कृतसाहित्याकाशे सूर्यवत् प्रकाशते। कालिदासस्तु सत्यवचसा स्वानुभूतिं परानुभूतौ परिवर्तितवान्। एतदेव साहित्यशास्त्रे साधारणीकरणमिति कथ्यते साहित्यविद्भिः। यः कोऽपि कविः एवं कर्तुं प्रभवति तत्काव्यस्य प्रशंसा कालत्रितयेऽपि भवति। इत्थं कालिदासस्य काव्यं सार्वकालिकं सार्वभौमिकञ्च वर्तते।

महाकवेः काव्यं केवलं साहित्यशास्त्रदृष्ट्यैव नहि अवगमनीयमपितु विभिन्नशास्त्रदृष्ट्यापि विचारणीयं वर्तते। सम्प्रति राजशास्त्रे समाजवादस्य रटनं श्रूयते सर्वत्रास्यैव प्रशंसा कुर्वन्ति नेतारः, परं ते तस्य किं स्वरूपमित्यत्र न जानन्ति अतस्तेषां काकालापं श्रुत्वा सहृदयानां मनो व्यथते। समाजवादः याथातथ्येन सर्वात्मवादः, यत्र

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेदिति॥**

वैदिकमन्त्रः स्फुरति। महाकविना अस्य वैदिकमन्त्रस्यैव वादः स्वकृतिषु वर्णितः। एषा एव आदर्शसृष्टिः या तत्काव्येषु परिदृश्यते।

एतत्तु सम्प्रति विद्वद्भिः निश्चितमेव यत् महाकविकालिदासस्य शिवः परमदेव इति। शिवस्य लिङ्गादीनि अनेकानि रूपाणि सन्ति। तेषु अष्टमूर्त्तिस्वरूपमतिप्रियमिति कवेः **अभिज्ञानशाकुन्तलम्**-नाम्न्या रचनया प्रख्यातमिति। अष्टमूर्त्तितत्त्वं विष्णोः विराट्-वर्णनवत् शिवस्य विराट्वर्णनं करोति। शिवस्यास्यां मूर्त्तौ

सम्पूर्णं ब्रह्माण्डं निहितमस्ति। समाजवादे कस्यचिदपि राष्ट्रस्य कृते जनानां निवासाय निश्चितभूभागः, शुद्धंजलं, सुखकरः प्रकाशः, प्राणप्रदः वायुरिति, चतुर्णां वस्तूनां सम्यगुपलब्धिः आवश्यकीया वर्तते। समाजवादस्य प्रारम्भिकमिदं कर्त्तव्यं यदेतेषां पूरणाय सदा प्रयतनीयम्। अष्टमूर्त्तेः अस्मिन्पूर्वार्धे तदुत्तरार्धन्तु विलेतुं शक्यते। वायौ संचरणस्थलत्वात् आकाशम्, अग्नौ दाहकत्वात् सूर्यः,जले शीतलत्वात् चन्द्रः, तथा पृथिव्यां सर्वाधारत्वात् यजमान अन्तर्भवति। यजमानस्तु प्रजारूपेण समाजवादस्य मेरुदण्डत्वेन प्रतिभाति। तं प्रत्येव सर्वमिदं दृश्यमानं प्रपञ्चात्मकं कार्यमपेक्षते। यजमानेष्वेव कश्चित् शासकः कश्चित् शासित इति भवति। समाजवादे शासकस्य शासितं प्रति किं कर्त्तव्यमित्यत्र महाकवेः विचारः निम्नोक्तेषु श्लोकेषु स्फुटीभवति—

**प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।**
**सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥**

( रघुवंशम्, १।१८ )

**जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नजः।**
**क्षितिरभूत् फलवत्यजनन्दने शमरतेऽमरतेजसि पार्थिवे॥**

( रघुवंशम्, ९।४ )

**स्थाने भवानेकनराधिपः सन्नकिञ्चनत्वं मखजं व्यनक्ति।**
**पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः॥**

( रघुवंशम् ५।१६ )

एषु श्लोकेषु कवेः समाजवादिनी भावना सम्यङ् मुखरिता भवति। भारतीयसमाजवादस्य प्रतिष्ठायै भारतीयानां कृतेऽस्याः भावनायाः ज्ञान नितान्तमावश्यकम्। प्रथमश्लोके रविः कालिदासस्य व्यापकविचारग्रहणाय महान् प्रेरकत्वेन वर्णित। सूर्यः अष्टमूर्त्तेः एकं प्रधानं स्वरूपम्। द्वितीये श्लोके सर्वजनसुखाय रोगनिवारणं, बाह्यशत्रूणामाक्रमणेन राष्ट्ररक्षणञ्च परमं कर्त्तव्यमिति नृपस्य शासकस्य वर्णनं करोति कविः। एवमेव तृतीये श्लोके चन्द्रस्योपमानत्वेन राष्ट्रस्थितसम्पत्तीना शोभनः विनियोगः वर्णितः कविना। पृथिवी यदा फलवती भवति तदैव समाजवादः प्रतिष्ठते।

इत्थं नास्तिकदृष्ट्या समाजवादप्रतीकः अष्टमूर्त्तिः कालिदासस्य इष्टदेव । समाजवादमन् कवेः कृतिषु आदर्शसृष्टित्वेन प्रकटयति । समाजवादस्यापर पक्ष आदर्शसृष्टिरेव भवति । यदा-यदा समाजवाद आदर्शसृष्टौ यथार्थसृष्टि करोति तदा तदा अष्टमूर्त्यात्मिकस्य राष्ट्रस्य भौतिक आध्यात्मिकश्च विकासः जायते । समाजवादे याथार्थ्यं विहाय वयं किमपि कर्तुमपि न शक्नुमः । कालिदासस्य काव्यमस्यैव निदर्शनम् ।

समाजवादे प्रतिभा-श्रम-चरित्राणां प्राधान्यमपेक्षते । एतेषां त्रयाणा समाहारः मानवान् पूर्णत्वं प्रति प्रेरयति । कालिदासस्य कस्मिन्नपि पात्रे सर्वमेतद् वयं द्रष्टुं शक्नुमः । पतिगृहंप्राप्ता तिरस्कृता शकुन्तला यदा राजानं प्रतिवदति—

**यूयमेव प्रमाणं जानीथ धर्मस्थितिश्च लोकस्य ।**
**लज्जाविनिर्जिता जानन्ति न किमपि महिलाः ॥**

( शाकुन्तलम् ५।२६ )

इत्यस्मिन श्लोके शकुन्तलायाः अपमानजन्यप्रतिभायाः स्वाभाविकं स्फुरणं दृश्यते । इत्थमेव श्रमस्योदाहरणं तस्याः वृक्षसेचनप्रसङ्गे बहुतर द्रष्टव्यमस्ति । चरित्रस्यापि निदर्शन तदा दृश्यते यदा सा केनापि दिव्यज्योतिषा मारीचाश्रम प्रति नीता, तत्र च स्वं चरित्र रक्षन्ती कथ दिवसान् यापयामास । इत्यमेव कवेः पात्रेषु सर्वत्र वयमवलोकयितुं क्षमाः ।

कालिदासरचितं नाटकत्रय काव्यचतुष्टयञ्च वर्तते । तेषु सर्वेषु काव्येषु कविना याथार्थ्यमूलयेन आदर्शः निहित । इत्थं कविः आदर्शं स्वकृतिषु काव्यात्मानमिव उद्घोषयति । आत्मानं विना यथा शरीरं व्यर्थं तद्वत् आदर्शं विना काव्य निरुद्देश्यमिति । नाटकेषु 'अभिज्ञानशाकुन्तलं' श्रेष्ठमिति सर्वैः समीक्षकैः निरूपितम् । यथा— **"काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला"** इत्येषा उक्तिः प्रचलितास्ति । अस्माक. कृतेऽभिज्ञानशाकुन्तले कविः यं संदेशं ददाति सोऽयमस्ति—

**अतः परीक्ष्य कर्त्तव्यं विशेषात् संगतं रह ।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥**

( शाकुन्तलम् ५।२७ )